का भुवि प्रथमाधिपदैत्यानां घोरशस्त्रास्त्रसंकुलं ३४ भेरीमृदंगशंखाद्यैर्निर्घोषैर्वीरहर्षणैः गजाश्वरथशब्दैश्च नादिताभूर्व्यकंप
त ३५ प्रक्षिप्तैमरबाणौघमुसलप्रासतोमरैः व्यराजत नभः पूर्णं सुक्ताभिरिव संवृतं ३६ निहतै रथनागाश्वनरैर्भूमिर्व्यराजत वज्रा
हताचलशिरःशकलैरिव संवृता ३७ प्रमथाहतदैत्यौघैर्दैत्याहतगणैस्तथा वसासृक्मांसपंकाद्यैर्गौरगम्याभवत्तदा ३८ प्रमथाहतदै
त्यौघान्भार्गवः समजीवयत् युद्धे पुनःपुनश्चैव मृतसंजीवनीबलात् ३९ तान्दृष्ट्वा व्याकुलीभूतागणाः सर्वे भयार्दिताः शशंसुर्देवदेवायतत्स
र्वमुन्नचेष्टितं ४० अथरुद्रमुखात्कृत्याबभूवातीवभीषणा तालजंघोदरीवक्त्रास्तनपीडितभूरुहा ४१ सायुद्धभूमिमासाद्य भक्षयंती महासु
रान् भार्गवंस्वभगे कृत्वाजगामांतर्हिताभवत् ४२ विधृतं भार्गवं दृष्ट्वा दैत्यसेनागणास्तदा प्रम्लानवदनाहर्षान्निर्जघ्नुर्युद्धदुर्मदाः ४३ आ
श्वाभज्यत दैत्यानां सेनागणभयार्दिता वायुवेगहतायद्वत्प्रकीर्णा तृणसंहतिः भग्नां गणभयात्सेनां दृष्ट्वामर्षयुताययुः ४४ निशुंभशुंभसेना
न्यौ कालनेमिश्च वीर्यवान् त्रयस्ते वारयामासुर्गणसेनां महाबलाः ४५ मुंचंतः शरवर्षाणि प्रावृषीव बलाहकाः तत्र दैत्यशरौघास्ते शल
भा इवताःप्रजाः ४६ रुरुधुः खं दिशः सर्वा गणसेनामकंपयन् गणाः शरशतैर्भिन्ना रुधिरासारवर्षिणः ४७ वसंते किंशुकाभासा न प्रज्ञायत
किंचन पतिता पात्यमानाश्च छिन्नभिन्नास्तदागणाः ४८ त्यक्त्वा संग्रामभूमिं तु ते सर्वे विमुखाभवन् ४९ ततः प्रभग्नं स्वबलं विलोक्य गजास्य
नंदीश्वरकार्तिकेयाः त्वरान्विता दैत्यवरानसह्यान्निवारयामासुरमर्षणास्ते ५० ते गणाधिपतीन्दृष्ट्वा नंदीभमुखषण्मुखान् अमर्षाद् गम·
भ्यधावंत द्वंद्वयुद्धाय दानवाः ५१ नंदिनं कालनेमिस्तु शुंभो लंबोदरं तदा निशुंभः षण्मुखं वेगादभ्यधावंत दंशिताः ५२ निशुंभः कार्तिकेय। ८
स्य मयूरं पंचभिः शरैः हृदि विव्याध वेगेन मूर्छितः सपपात ह ५३ ततः शक्तिधरः शक्तिं यावज्जग्राह रोषितः तावन्निशुंभो वेगेन सशस्त्रान्

मपातयत् ५४ ततोनंदीश्वरोबाणैःकालनेमिमबध्यत सप्तभिश्चहयान्केतुंरथंसारथिमच्छिनत् ५५ कालनेमिस्तुसंक्रुद्धोधनुःचिच्छे
दनंदिनः तदानंदीश्वरस्तंतुत्रिशूलेनाहनहृदं ५६ सच्छिन्नहृदयोहताश्वोहतसारथिः अद्रेःशिखरमासुच्यशैलादिंसोप्यपातयत् ५७
अथशुंभोगणेशश्चरथमूषकवाहनौ युध्यमानौशरव्रातैःपरस्परमविध्यतां ५८ गणेशस्तुतदाशुंभंहृदिविव्याधपत्रिणा सारथिंचत्रि
भिर्बाणैःपातयामासभूतले ५९ ततोतिकोपःशुंभोपिबाणपंक्त्यागणाधिपं मूषकंचत्रिभिर्विध्यानानादजलदस्वनः ६० मूषकःशरभिन्नां
गश्चचालदृढवेदनः लंबोदरश्चपतितःपदातिरभवन्मुने ६१ ततोलंबोदरःशुंभंहत्वापरशुनाहृदि अपातयत्तदाभूमौमूषकंचारुहत्पुनः
६२ कालनेमिर्निशुंभश्चद्युभौलंबोदरंशरैः युगपज्जघ्नतुःक्रोधात्तोत्रेणेवमहाद्विपं ६३ तंपीड्यमानमालोक्यवीरभद्रोमहाबलः अनःकि
लकिलाशब्दैःसिंहनादैःसघर्घरैः विनादितोडमरुकैःपृथिवीसमकंपयत् ६६ ततोभूतान्यधावंतभक्षयंतिस्मदानवान् उत्पतंत्यापतंति
स्मननृतुश्चरणांगणे ६७ नंदीचकार्तिकेयश्चसमाश्वस्तौत्वरान्वितौ निजघ्नतुस्ततोदैत्यान्निरंतरशरव्रजैः ६८ छिन्नभिन्नाहतैर्दैत्यैःपतितै
र्भक्षितैस्तथा व्याकुलासाभवत्सेनाविषण्णवदनातदा ६९ प्रतिध्वस्तांतदासेनांदृष्ट्वासागरनंदनः रथिनापतिनाकेनसंग्रामेसगतो
बली ७० हस्त्यश्वरथसंचारैःशंखभेरीरवैस्तथा अभवत्सिंहनादश्चसेनयोरुभयोस्तदा ७१ जलंधरशरव्रातैर्नीहारपटलैरिव द्यावा
पृथिव्योराच्छन्नमंतरंसमपद्यत ७२ गणेशंपंचभिर्विध्वाशैलादिंनवभिःशरैः वीरभद्रंचविंशत्यानदत्सुमहास्वनः ७३ कार्तिकेयस्ततोदैत्यं
शक्त्याविव्याधसत्वरः जुघूर्णःशक्तिनिर्भिन्नःकिंचिद्व्याकुलमानसः ७४ ततःक्रोधपरीतास्यःकार्तिकेयंजलंधरः गदयाताडयामाससचभूमि

का॰मा॰
९

नलेपतत् ७५ तथैवनंदिनंवेगादपातयतभूतले ततोगणेश्वरः क्रुद्धोगदांपरशुनाछिनत् ७६ वीरभद्रस्त्रिभिर्वाणैःहृदिविव्याधदान
वम् सप्तभिश्चहयान्केतुंधनुःछत्रंचचिछिदे ७७ ततोनिकुंभोदैत्येंद्रः शक्तिमुद्यम्यदारुणां गणेशंपातयामासरथमन्यंसमारुहत् ७८
अभ्ययाद्दथवेगेनवीरभद्रंरुषान्वितः ततस्तौसूर्यसंकाशौयुयुधातेपरस्परं ७९ वीरभद्रस्ततस्तस्यहयान्वाणैरपातयत् धनुश्चचिच्छिदे
दैत्योजग्राहपरिघंतदा ८० सवीरभद्रंत्वरयाभिगम्यजघानदैत्यःपरिघेनमूर्ध्नि सचापिवीरप्रतिभिन्नमूर्धापपातभूमौरुधिरंसमुद्गि
रन् ८१ ॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेचतुर्थोऽध्यायः ४ ॥ नारदउवाच पतितंवीरभद्रंतुदृष्ट्वारुद्रगणा
भयात् आगच्छंतोरणंहित्वाक्रोशमानामहेश्वरं १ अथकोलाहलंश्रुत्वागणानांचंद्रशेखरः अभ्ययाद्वृषमारूढःसंग्रामंचहसन्निव २ रुद्र
मायांतमालोक्यसिंहनादैर्गणाःपुनः निवृत्तास्संगरेदैत्यान्निजघ्नुः शरवृष्टिभिः ३ दैत्याश्चभीषणंदृष्ट्वारुद्रंसर्वेविदुद्रुवुः कार्तिकव्रतिनंदृष्ट्वा
पातकानीवतद्भयात् ४ जलंधरस्ततोदैत्यान्विद्रुतान्प्रेक्ष्यसंगरे क्रोधादधावच्चंडीशंमुंचन्वाणान्सहस्रशः ५ शुंभोनिशुंभोश्वमुखः
कालनेमिर्वलाहकः खड्गरोमाप्रचंडश्चघस्मरश्चशिवंययुः ६ वाणांधकारसंछन्नंदृष्ट्वातत्रशिवःप्रभुः तद्वाणजालमाछिद्यस्ववाणैरा
कृष्णोनभः ७ दैत्यान्वाणवितत्याभिःपीडितानकरोत्तदा प्रचंडंवाणजालौघैरपातयतभूतले ८ खड्गरोम्णःशिरःकोपात्तयापरशुनाच्छि
नत् वलाहकस्यचशिरःखट्वांगेनाकरोद्द्विधा ९ वध्वाचघस्मरंदैत्यंपाशेनाभ्यहनद्भुवि वृषभेणाहताकेचित्केचिद्वाणैर्निपातिताः १०
नशेकुरसुराःस्थातुंगजाःसिंहार्दितायथा ततःकोपपरीतात्माकोपाद्रुद्रंजलंधरः ११ आह्वयामाससमरेतीव्राशनिसमस्वनः जलंधरउवा
च युध्यस्वाद्यमयासार्द्धंकिमेभिर्निहितैस्तव १२ यच्चकिंचिद्वलंतेस्तितद्दर्शयजटाधर नारदउवाच इत्युक्त्वावाणसप्तत्याजघानवृषभध्व

राम
९

नंदिमुरेश्वा

जं १३ तान्याप्तानशितैर्वाणैश्चिच्छेदसहसन्निव ततोहयान्ध्वजंछत्रंधनुश्चिच्छेदसप्तभिः १४ सच्छिन्नधन्वाविरथोगदामुद्यम्यवेग
वान् अभ्यधावच्छिवंतावद्गदांबाणैर्द्विधाकरोत् १५ तथापिमुष्टिमुद्यम्यययौरुद्रजिघांसया तावद्देवेनवाणौघैः क्रोशमात्रमपाकृतः
१६ ततोजलंधरोदैत्योमत्वारुद्रंबलाधिकं ससर्जमायांगांधर्वीमद्भुतांरुद्रमोहिनीं १७ ततोजगुश्चननृतुर्गंधर्वाप्सरसांगणाः तालवे
णुमृदंगाश्चवाद्यंतिस्मचापरे १८ तंदृष्ट्वामहदाश्चर्यंरुद्रोनादविमोहितः पतितान्यपिशस्त्राणिकरेभ्योनचवेत्तिसः १९ एकाग्रीभूतमालो
कारुद्रंदैत्योजलंधरः कामार्तःसजगामाशुयत्रगौरीस्थिताभवत् २० युद्धेशुंभनिशुंभाख्यौस्थापयित्वामहाबलौ दशदोर्दंडपंचास्यस्त्रिने
त्रश्चजटाधरः २१ महावृषभमारूढःसबभूवजलंधरः अथरुद्रंसमालोक्यआयांतंभववल्लभा २२ अभ्याययौसखीमध्यात्तद्दर्शनपथे
भवत् यावद्ददर्शचार्वंगींपार्वतींदनुजेश्वरः २३ तावत्सवीर्यंमुमुचेजडांगश्चततोभवत् अथज्ञात्वाततोगौरीदानवंभयविह्वला जगामांत
र्हितावेगात्सातदोत्तरमानसं तामदृष्ट्वाततोदैत्यःक्षणाद्विद्युल्लतामिव २५ जवेनागात्पुनर्योद्धुंयत्रदेवोवृषध्वजः पार्वत्यपिमहाविष्णुंस
स्मारमनसातदा २६ तावद्ददर्शतंदेवंसापिविष्णुंसमीपगं पार्वत्युवाच विष्णोजलंधरोदैत्यःकृतवान्परमाद्भुतं २७ तत्किंनविदितंतेऽ
स्तिचेष्टितंतस्यदुर्मतेः श्रीभगवानुवाच तेनैवदर्शितःपंथावयमप्यन्वियामहे नान्यथासभवेद्वध्यःपातिव्रत्यात्सुरक्षितं नारदउवा
च जगामसविष्णुरित्युक्त्वापुनर्जालंधरंपुरं २९ अथरुद्रश्चगंधर्वानुगतःसंगरेस्थितः अंतर्धानगतांमायांदृष्ट्वासबुबुधेतदा ३० ततःशि
वोविस्मितमानसःपुनर्जगामयुद्धायजलंधरंरुषा सचापिदैत्यःपुनरागतंशिवंदृष्ट्वाशरौघैःसमवाकिरद्रणे ३१ विष्णुर्जालंधरंगत्वातद्दै
त्यपुटभेदनं पातिव्रत्यस्यभंगायवृंदायांचाकरोन्मतिम् ३२ अथवृंदास्वकादेवीस्वप्नमध्येददर्शह भर्तारंमहिषारूढंतैलाभ्यक्तंदिगंबरं

का·मा ९०

३३ फलप्रसूनभूषाढ्यां क्रव्यादगणसेवितं दक्षिणाशांगतं मुंडं तमसाव्याहृतं तदा ३४ स्वपरं सागरे मग्नं सहसैवात्मनासह ततः प्रबुद्धा सा
बालानत्स्वप्नं च विचिन्वति ३५ ददर्शोदितमादित्यं सच्छिद्रं निष्प्रभं मुहुः तदनिष्टमिति ज्ञात्वा रुदती भयविह्वला ३६ कुत्रचिन्नालभच्छर्म गोप
राट्टालभूमिषु ततः सखीद्वययुता नगरोद्यानमागमत् ३७ तत्रापि सा गता बाला नालभत्कुत्रचित्सुखं वनाद्वनांतरं याता नैव वेदात्मनस्तनु
३८ ततः सा भ्रमती बाला ददर्शातीव भीषणौ राक्षसौ सिंहवदनौ दंष्ट्रानयनभास्वरौ ३९ तौ दृष्ट्वा विह्वलातीव पलायनपरा तदा ददर्श तापसं
शांतं सशिष्यं मौनमास्थितं ४० ततस्तत्कंठमासज्य निजां बाहुलतां तदा हुंकारेणैव तौ घोरौ चकार विमुखौ तदा ४१ तद्धुंकारभयत्रस्तौ द
द्रुतौ विमुखौ गतौ प्रणम्य दंडवद्भूमौ वृंदा वचनमब्रवीत् ४२ वृंदोवाच रक्षिताहं त्वया घोरात्भयादस्मात्कृपानिधे किंचिद्विज्ञप्तुमिच्छामि
कृपया तन्निशामय ४३ जलंधरो हि मे भर्ता रुद्रं योद्धुं गतः प्रभो स तत्रास्ते कथं युद्धे तन्मे कथय सुव्रत ४४ नारद उवाच मुनिस्तद्वाक्यमाक
र्ण्य कृपयोर्द्ध्वमवैक्षत तावत्कपी समायातौ तं प्रणम्याग्रतः स्थितौ शिरः कबंधहस्तौ तौ दृष्ट्वाब्धितनयस्य सा पपात मूर्छिता भूमौ भर्तृव्यस
नदुःखिता ४६ कमंडलुजलासिक्ता मुनिनाश्वासिता तदा भर्तृभाले स्वकं भालं कृत्वा रोदनाकरोदह ४७ वृंदोवाच यः पुरा सुखसंवादै
र्विनोदयसि मां विभो न कथं नवदस्याद्य वल्लभां मामनागसं ४८ येन देवाः सगंधर्वा निर्जिता विष्णुना सह स कथं तापसेन त्वं त्रैलोक्यवि
जयी हतः ४९ नारद उवाच इति विलप्य तदा वृंदा तं मुनिं वाक्यमब्रवीत् वृंदोवाच कृपानिधे मुनिश्रेष्ठ जीवयैनं मम प्रियं ५० त्वमेवास्य पु
नः शक्तो जीवनाय मतो मम नारद उवाच इति तद्वाक्यमाकर्ण्य प्रहस्य स मुनिरब्रवीत् ५१ नायं जीवयितुं शक्यो रुद्रेण निहतो युधि तथा
पि कृपया विष्टस्त्वं संजीवयाम्यहं नारद उवाच इत्युक्त्वांतर्दधे यावत्तावत्सागरनंदनः वृंदामालिंग्य तद्वक्त्रं चुचुंब प्रीतिमानसः ॥ ५२ ॥ ५

मा ५

राम १०

अथवृंदापिभर्तारं दृष्ट्वाहर्षितमानसा रेमेतद्वनमध्यस्थातद्युक्ताबहुवासरं ५४ कदाचित्सुरतस्यांते दृष्ट्वाविष्णुंतमेवहि निर्भर्त्स्यक्रोधसंयु-
क्तावृंदावचनमब्रवीत् ५५ वृंदोवाच मायाशतविदंधित्वामभजंतंप्रियंजनं येनतेनविनाध्वस्तंपातिव्रत्यंमहाव्रतं ५६ नूनंमेनिहतोभर्ताय-
त्तुभिर्नात्रसंशयः पातिव्रत्यबलादेवनवैधव्यममाभवत् ५७ तज्ज्ञातंमेतिमंदायाजीवितेनममाद्यकिं इत्युक्त्वावचनंवृंदाजीवनंत्यक्तुमु-
द्यता ५८ विष्णुरुवाच वस्तुतस्तेपतिरहंमायापतिश्चराचरं ममैवरूपंतत्त्वंगिमासिदस्तदिदंशृणु ५९ श्रियासहैकांप्राप्यैवममवक्षः-
स्थलेचतेश्रियासिमेत्वंसुश्रोणिनचवैधव्यमस्तिते ६० इतिवाक्यंनिशम्याथसाशशापरुषाहरिं त्वंशिलाभवगोविंदस्तुनःप्राहहरिस्थतां
६१ श्रीभगवानुवाच प्रयच्छत्वंवरंयन्मामशापःकोपनेमुधा त्वमपिस्थावराभूत्वामयिसंयोगमेष्यसि ६२ वृंदोवाच धिक्त्वेदंहरेः-
शीलंपरदाराभिगामिनः ज्ञातोसित्वंमयासम्यगपिप्रत्यक्षतापसः ६३ यौत्वयामाययाद्वास्थौस्वकीयौदर्शितौमम तावेवराक्षसौभूत्वा-
तवभार्यांहरिष्यतः ६४ त्वंचापिभार्यादुःखार्तोवनेकपिसहायवान् भ्रमधैर्यंकरश्चास्तुयस्तेशिष्यत्वमागतः ६५ इत्युक्त्वासातदावृंदाप्रावि-
शद्धव्यवाहनं विष्णुनावार्यमाणापितस्मिन्नासक्तमानसा ६६ ततोहरिस्तामनुसंस्मरन्मुहुर्वृंदांचिताभस्मरजोवगुंठितः तत्रैवतस्थौमुनि-
सिद्धसंघैःप्रबोध्यमानोपिययौनशांतिम् ६७॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेपंचमोध्यायः ५ नारदउवाच ततोज-
लंधरोदृष्ट्वारुद्रमद्भुतविक्रमम् चकारमाययागौरींत्र्यंबकंमोहयन्निव १ रथोपरिगतांदृष्ट्वारुदंतींपार्वतींशिवः निशुंभशुंभमुखैर्बध्यमा-
नांदैत्यैःसः २ गौरींतथाविधांदृष्ट्वाशिवोप्युद्विग्नमानसः अवाङ्मुखःस्थितस्तूष्णींविस्मृत्यस्वपराक्रमम् ततोजलंधरोवेगात्त्रिभिर्विव्याधसा-
यकैः आपुंखमग्नैस्तंरुद्रंशिरस्युरसिचोदरे ४ ततोज्ञात्वासतांमायांविष्णुनासंप्रबोधितः रौद्ररूपधरोजातोज्वालामालातिभीषणः ५ ता-

स्यातीवमहारौद्रंरूपंदृष्ट्वामहासुराः नशेकुःप्रमुखेस्थातुंभेजिरेचदिशोदश ६ ततःशापंददौदेवस्तयोःशुंभनिशुंभयोः ममयुद्धादपक्रांतौ
गौर्यावध्यौभविष्यतः ७ पुनर्जलंधरोवेगाद्ववर्षनिशितैःशरैः बाणान्धकारसंछन्नंयथाभूतंबलंमहत् ८ यावद्रुद्रस्तुचिच्छेदतत्स्वबाणग
णांस्त्वरात् तावत्सपरिघेणाशुजघानवृषभंबली ९ वृषस्तेनप्रहारेणपरावृत्तोरणांगणात् रुद्रेणाकृष्यमाणोपिनतस्थौरणभूमिषु १०
ततःपरमसंक्रुद्धोरुद्रोरौद्रवपुर्द्धरः चक्रंसुदर्शनंवेगाच्चिक्षेपादित्यवर्चसं ११ प्रदहद्रोदसीवेगात्तदासाद्यजलंधरं जहारतच्छिरःका
यान्महद्दायतलोचनं १२ रथात्कायःपपातोर्व्यांनादयन्वसुधातलं तस्यदेहोत्थितंज्योतिर्विवेशवदनेविभोः १३ अथब्रह्मादयोदेवा
हर्षादुत्फुल्ललोचनाः प्रणम्यशिरसारुद्रंशशंसुर्विष्णुचेष्टितं १४ देवाऊचुः महादेवत्वयादेवाःरक्षिताःशत्रुतोभयात् किंचिदन्यत्समुद्भू
तंतत्रकिंकरवामहे १५ वृंदालावण्यसंभ्रांतोविष्णुस्तिष्ठतिमोहितः रुद्रोवाच गच्छध्वंशरणंदेवाःविष्णोर्मोहापनुत्तये १६ शरण्यांमोहि
नींमायांसावःकार्यंकरिष्यति नारदउवाच इत्युक्त्वांतर्दधेदेवाः सुहद्भूतगणैर्हरः १७ देवाश्चतुष्टुवुर्मूलप्रकृतिंभक्तवत्सलां देवाऊचुः यदु
द्भवाःसत्वरजस्तमोगुणाःसर्गस्थितिध्वंसनिदानकारणाः यदिच्छयाविश्वमिदंभवाभवौतनोतिमूलप्रकृतिंनताःस्मतां १८ याहित्रयोविंशति
भेदसंज्ञिताजगत्यशेषेसमधिष्ठितापरा यद्रूपकर्माणिजडास्त्रयोपितेदेवान्विद्युःप्रकृतिंनताःस्मतां १९ यद्भक्तियुक्ताःपुरुषास्तुनित्यंदारि
द्र्यसंमोहपराभवादीन् नप्राप्नुवंत्येवहिभक्तवत्सलांसदैवमूलप्रकृतिंनताःस्मतां २० नारदउवाच स्तोत्रमेतत्त्रिसंध्यंयःपठेदेकाग्रमानः।
सः दारिद्र्यमोहदुःखानिनकदाचित्स्पृशंतितम् २१ इतिस्तुवंतस्तांदेवास्तेजोमंडलमास्थितं ददृशुर्गगनेतत्रज्वालाव्याप्तदिगंतरं २२ ॥
तन्मध्याद्भारतींसर्वेशुश्रुवुर्व्योमचारिणीं अहमेवत्रिधाभिन्नातिष्ठामित्रिविधैर्गुणैः २३ गौरीलक्ष्मीस्वराचेतिरजःसत्वतमोगुणैः तत्रा

गच्छततः कार्यंविधास्यंतेववःसुराः २४ नारदउवाच श्रृणवतामितितांवाचसंतर्द्धानमगान्महः देवानांविस्मयोत्फुल्लनेत्राणांतत्र हासुने
२५ ततःसर्वेपितेदेवाःश्रुत्वातद्वाक्यनोदिताः गौरीलक्ष्मीस्वराश्चैवप्रणेमुर्भक्तवत्सलाः २६ ततस्तास्तान्सुरान्दृष्ट्वाप्रणतान्भक्तवत्सलाःवीजा
निप्रददुस्तेभ्योवाक्यान्यूचुश्चभोद्विजाः २७ देवाऊचुः इमानितत्रवीजानिविष्णुर्यत्रावतिष्ठते निर्वपध्वंततःकार्यंभवतांसिद्धिमेष्यति २८
नारदउवाच ततःसुहृष्टाःसुरसिद्धसंघाप्रगृह्यवीजानिविचिक्षिपुश्च वृंदाचितावस्थितलेसयत्रविष्णुःसदातिष्ठतिसौख्ययुक्तः २९ क्षिप्ते
भ्यस्तत्रवीजेभ्योवानस्पत्यास्त्रयोऽभवन् धात्रीचमालतीचैवतुलसीचद्विजोत्तमाः धात्र्युद्भवास्मृताधात्रीमाभवामालतीस्मृता गौरीभवाच
तुलसीतमःसत्वरजोगुणाः ३१ स्त्रीरूपिण्योबभूबुस्ताःदृष्ट्वाविष्णुस्तदामुने उत्तस्थौसंभ्रमाद्वृंदारूपातिशयविभ्रमात् ३२ दृष्ट्वाचतेनता
रागात्कामासक्तेनचेतसा तंचापितुलसीधात्र्यौरागेणैवावलोकताम् ३३ यच्चलक्ष्म्याःपुरावीजंमाययैवसमर्पितं तस्मात्तदुद्भवानारी
तस्मिन्नीर्षायुताभवत् ३४ अतःसावर्बरीत्याख्यामवापातीवगर्हिता धात्रीतुलस्यौतद्रागात्तस्यप्रीतिप्रदेसदा ३५ ततोविस्मृतदुःखो
सौविष्णुस्ताभ्यांसहैवतु वैकुंठमगमद्धृष्टःसर्वदेवनमस्कृतः ३६ अथविष्णुश्चगंडक्यांशालग्रामाभिधोभवत् वृंदाचतुलसीभूत्वाशाल
ग्रामाभिधेहरौ ३७ पुनःसंयोगमापेदेहरेरत्यंतवल्लभा इत्येवंवल्लभाविष्णोःपूर्वजन्मन्यथाधुना ३८ प्रीयतेपूजितोह्यस्यादलैर्दैत्यव
लांतकः मंजरीभिःसपत्राभिर्मालाभिश्चापिकेशवः ३९ तुलस्याःकार्तिकेप्रीतोददातिपदमव्ययं श्यामापितुलसीविष्णोःप्रियागौरीवि
शेषतः ४० यद्गृहेतुलसीभातिरक्षाभिर्जलसेचनैः शुश्रूषितोहरिस्तेषुनात्रकार्याविचारणा ४१ ललाटेतिलकंयेषांतुलसीमूलमृत्ति
का अपिदुःकृतिनस्तेस्युःतान्दूतानस्पृशंतिहि ४२ नावज्ञाजातुकार्यास्याद्वृंदाभावान्मनीषिभिः यथाहिवासुदेवस्यवैकुंठेभोगविग्रहः

४३ शालग्रामशिलारूपमपरंभुविदृश्यते तथालक्ष्म्यैकमापन्नातुलसीभोगविग्रहः ४४ अपरंस्थावरंरूपंभुविलोकहितायवै स्पृष्टादृष्ट
रक्षितात्वमहापातकनाशिनी ४५ दर्शनंनर्मदायास्तुगंगास्नानंतथैवच तुलसीवनसंसर्गः सममेतत्त्रयंस्मृतं ४६ पुष्कराद्यानितीर्थानि
निगंगाद्याःसरितस्तथा वासुदेवादयोदेवावसंतितुलसीदले ४७ तुलसीमंजरीयुक्तोयस्तुप्राणान्विमुंचति यमोपिनेक्षितुंशक्तोयुक्तंपापश
तैरपि ४८ तुलसीकाष्ठजंयस्तुचंदनंधारयेन्नरः तद्देहंनस्पृशेत्पापंक्रियमाणमपीहयत् ४९ तुलसीविपिनच्छायायत्रयत्रभवेत्तुनेतत्रश्राद्धंप्र
कर्तव्यंपितृणांदत्तमक्षयं ५० तथैवधात्रीविज्ञेयाविष्णोरत्यंतवल्लभा धत्तेधात्रीफलंयस्तुसविज्ञेयोहरिःस्वयं ५१ धात्रीच्छायासुयःकुर्यात्
पिंडदानंमुनीश्वर मुक्तिंप्रयांतिपितरस्तस्ययेनिरयंगताः ५२ धात्रीछायांसमाश्रित्यकार्तिकेतुभुनक्तियः अन्नसंसर्गजंपापंआवर्षंतस्यनश्यति
५३ तथैवमालतीपुष्पैःपूजयेत्सनतंहरिम् ५४ इतिभृगुवरपृष्टोयत्त्वयाहंतुलस्यामधुमथनसुहृत्त्वंप्राकृतंजन्मचास्याः तदिदमखिलमुक्तं
त्वमियार्थंहरेश्चचरितमतुलचित्रंपापहृच्छ्रोतृवक्त्रोः ५५॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेषष्ठोऽध्यायः६ नारद
उवाच बोधनात्परदीपस्यवैसवानात्तुसेवनात् स्नानायतीर्थगमनान्नियमाद्विष्णुपूजनात् १ कार्तिकेफलमाप्नोतिराजसूयाश्वमेधयोःकार्ति
केमासियेनित्यंतुलासंस्थेदिवाकरे २ कुर्वंतिविष्णुतुष्ट्यैयेतेनराविष्णुमूर्तयः शौनकउवाच सर्वेपिकालावयवास्तस्यकालस्वरूपिणः ३मासाना
तुकथंविष्णोःकार्तिकःप्रवरःप्रियः एकादशीतिथीनांचतत्सर्वंकारणंवद ४ नारदउवाच साधुपृष्टंत्वयाविप्रविस्तरेणशृणुष्वभो शंखोना
मा‌भवत्पूर्वमसुरःसागरात्मजः ५ त्रिलोकीमथनेशक्तोमहाबलपराक्रमः जित्वालोकान्निराकृत्यस्वर्लोकात्समहासुरः ६ इन्द्रादिलोकपा
लानामधिकारांस्तथाहरत् तद्भयाद्दथनेदेवाःसुवर्णाद्रिगुहांगताः ७ अवसन्बहुवर्षाणिसावरोधाःसवासवाःसुवर्णाद्रिगुहादुर्गेसंस्थिता

८ तद्वास्थिनोवभूवुस्ततदादैत्योविचारयत् हृताधिकारास्त्रिदशामयायद्यपिनिर्जिताः ९ लक्ष्यन्तेवलयुक्तास्तेकरणीयंममात्रकिंआज्ञा
तंतुमयादेवावेदमंत्रवलान्विताः १० तान्हरिष्येततस्सर्वेवलहीनाभवन्तिहि इतिमत्वाततोदैत्योविष्णुमालक्ष्यनिद्रितं ११ सत्यलोकाज्जहा
राशुवेदानादिस्वयंभुवः नीतास्तुतेनतेवेदास्तद्भयात्तेनिराक्रमन् १२ तोयेभिविविशुर्यज्ञमंत्रवीर्यवलान्विताः तान्मार्गमाणःशंखोपिसमु
द्रान्तरगोभवत् १३ नददर्शततोदैत्यःक्वचिदेकत्रसंस्थितान् अथब्रह्मासुरैःसार्द्धंविष्णुंशरणमन्वगात् १४ पूजोपकरणान्गृह्यवैकुंठभवनंप्र
तःतत्रतस्यप्रवोधार्थंगीतवाद्यादिकाःक्रियाः १५ चक्रुर्देवागंधपुष्पधूपदीपान्मुहुर्मुहुः अथप्रबुद्धोभगवान्तद्भक्तिपरितोषितः १६ ददर्शतैस्तु
दैस्तत्रसहस्रार्कसमद्युतिः उपचारैःषोडशभिःसंपूज्यत्रिदशास्तदा १७ दंडवत्पतिताभूमौतानुवाचाथमाधवःविष्णुरुवाच वरदोहंसुरगा
णागीतवाद्यादिमंगलैः १८ मनोभिलषितान्कामान्सर्वानेवददामिवः ईर्षस्यशुक्लैकादश्यांयावदुद्बोधिनीभवेत् १९ निशातुर्यांशशेषेयेगीत
वाद्यादिमंगलान् कुर्वंतिनित्यंमनुजाभवद्भिर्यद्यथाकृतं २० तेमत्प्रियकरानित्यंमत्सान्निध्यंव्रजंतिते पाद्यार्घ्याचमनीयाद्यैर्भवद्भिर्यदुपाहृत
म् २१ तदद्भुतगुणायस्मादातंवःसुखकारणं वेदाःशंखहृताःसर्वेतिष्ठन्त्युदकसंस्थिताः २२ तामानयाम्यहंवेदान्हत्वासागरनंदनं अद्यप्रभृतिवे
दास्तुमंत्रवीजमखान्विताः २३ प्रत्यब्दंकार्त्तिकेमासिविश्रमंत्वप्सुसर्वदा अद्यप्रभृत्यहमपिभवामिजलमध्यगः २४ भवन्तोऽपिमयासार्द्धम
यांतुसमुनीश्वराःकालेस्मिन्नेवकुर्वंतिप्रातःस्नानंद्विजोत्तमाः २५ तेसर्वयज्ञावभृथैःसुस्नाताःस्युर्नसंशयः येकार्त्तिकव्रतंसम्यक्कुर्वंतिमनुजाः
सदा २६ तेदेहांतेत्वयाशक्रप्राप्यामद्भवनंसदा विघ्नेभ्योरक्षणंतेषांममकार्यंसदात्वया २७ देयात्वयाचवरुणपुत्रपौत्रादिसंततिः धनवृद्धिईः
नाध्यक्षत्वयाकार्यांममाज्ञया २८ ममरूपधराःसाक्षाज्जीवन्मुक्तास्तुतेयतः आजन्ममरणाद्येनकृतमेतद्व्रतोत्तमम् २९ यथोक्तविधिना॥

सम्यक्तेमान्याभवतामपि एकादश्यांयतस्त्वाहंभवद्भिःप्रतिबोधितः ३० अतश्चैवातिमन्यासाह्यतीवप्रीतिदामम ३१ व्रतद्वयंसम्यगिदंनरैः
कृतंसान्निध्यकृन्मेनतथान्यदस्ति दानानितीर्थानितपांसियज्ञाः स्वर्लोकदान्येवसदासुरोत्तमाः ३२ नारदउवाच इत्युक्त्वाभगवान्विष्णुः
शफरीतुल्यरूपधृक् स्वात्यपानांजलौविंध्यवासिनःकश्यपस्यच ३३ सतंकमंडलौस्वस्यकृपयाक्षिप्तवान्मुनिः तावत्सनममौतत्रततःकूपे
न्यवेशयत् ३४ तत्रापिनममौतावत्कासारंप्रापयत्सतं एवंससागरेक्षिप्तस्तत्रसोऽप्यन्ववर्द्धत ३५ ततोऽवधीत्सतंशंखंविष्णुर्मत्स्यस्वरूपधृ
क् अथतंस्वकरेकृत्वाबदरीवनमागमत् ३६ तत्राहूयऋषीन्सर्वानिदमाज्ञापयद्विभुः विष्णुरुवाच जलांतरविशीर्णांस्तुयूयंवेदान्प्रमार्ज
थ ३७ आनयध्वंत्वरातश्चसरहस्याञ्जलांतरात् तावत्प्रयागेतिष्ठामिदेवतागणसंयुतः ३८ नारदउवाच ततस्तैःसर्वमुनिभिस्तपोबलसम
न्वितैःउद्धारिताःषडंगास्तेवेदायज्ञसमन्विताः ३९ तेषुयावन्मितंयेनलब्धंतावन्मितस्यहि ससएवऋषिर्जातस्तदाप्रभृतिशौनक ४० अथसर्वेपिसं
गम्यप्रयागंमुनयोययुः विष्णवेसविधात्रेतेलब्ध्वान्वेदान्न्यवेदयन् लब्ध्वावेदान्सयज्ञांस्तुब्रह्मालोकपितामहः अथजह्वाजिमेधेनदेवर्षिगण
संवृतः ४२ यज्ञांतेदेवगंधर्वासिद्धपन्नगगुह्यकाः निपत्यदंडवद्भूमौविज्ञप्तिंतत्रचक्रिरे ४३ देवाऊचुः देवदेवजगन्नाथविज्ञप्तिंशृणुनः
प्रभो हर्षकालोऽयमस्माकंतस्मात्त्वंवरदोभव ४४ स्थानेस्मिन्द्रुहिणोवेदान्नष्टान्प्रापपुनःस्वयं यज्ञभागान्वयंप्राप्तास्त्वत्प्रसादाद्रमापते
४५ स्थानमेतदतिश्रेष्ठंपृथिव्यांपुण्यवर्द्धनम् विष्णुरुवाच ममाप्येतन्मितंदेवायद्भवद्भिरुदाहृतं ४६ तीर्थराजेतिविख्यातंतीर्थमेतद्भ
विष्यति दानंतपोव्रतंहोमोजपःपूजादिकाःक्रियाः ४७ अनंतफलदाःसंतुमत्सान्निध्यकराःसदा कालोप्येषमहापुण्यःफलदोस्तुसदा
नृणाम् ४८ नारदउवाच एवंदेवान्देवदेवस्तदुक्त्वातत्रैवांतर्द्धानमगात्सवेधाः देवाःसर्वेऽप्यंशकैस्तत्रतिष्ठन्नंतर्द्धानंप्रापुरिंद्रादयस्ते ।

४९ इतिकार्त्तिकमासस्यमयोत्पत्तिः प्रकीर्त्तिता सेतिहासंचभोब्रह्मन्किमन्यच्छ्रोतुमिच्छसि ५० शौनकउवाच नियमान्कार्त्तिकस्या
स्यतिथीनांकृत्यमत्रयत् सोद्यापनविधिंब्रूहियथावत्प्रणतस्यमे ५१ नारदउवाच कार्त्तिकव्रतिनांपुंसांनियमायेप्रकीर्त्तिताः तान्शृणुष्वम
हाप्राज्ञकथ्यमानान्समन्ततः ५२ सर्वामिषाणिमांसानिक्षौद्रंसौवीरकंतथा राजिकामादकंचापिनैवाद्यात्कार्त्तिकव्रती ५३ देववेदद्विजानां
चगुरुगोव्रतिनांतथा स्त्रीराजमहतांनिंदांवर्जयेत्कार्त्तिकव्रती ५४ द्विदलंतिलतैलंचतथान्नंशल्यदूषितम् भावदुष्टंशब्ददुष्टंवर्जयेत्का
र्त्तिकव्रती ५५ परान्नमामिषंचूर्णंफलेजंबीरमामिषम् धान्येमसूरिकाप्रोक्ताह्यन्नंपर्युषितंतथा ५६ गोच्छागीमहिषीभूतमन्यदुग्धा
दिचामिषं द्विजक्रीतारसाःसर्वेलवणंभूमिजंतथा ५७ ताम्रपात्रस्थितंगव्यंजलंपल्वलसंस्थितं आत्मार्थंपाचितंचान्नमामिषंतत्स्मृ
तंबुधैः ५८ ब्रह्मचर्यमधःस्वापंपत्रावल्यांतुभोजनं चतुर्थकालेभुंजीतकुर्यादेवंसदाव्रती ५९ नरकस्यचतुर्दश्यांतैलाभ्यंगंचकारयेत्
अन्यत्रकार्त्तिकस्नायीतैलाभ्यंगंनकारयेत् ६० पलांडुंलसुनंशृंगंछत्राकंगृंजनंतथा नालिकांमूलकंशिग्रुंवर्जयेत्कार्त्तिकव्रती ६१ अलावुं
चापिवृंताकंकूष्मांडंबृहतीफलं कलिंगंचकपित्थंचवर्जयेत्कार्त्तिकव्रती ६२ श्वभिर्दृष्टंचकाकैश्चसूतकान्नंचवर्जयेत् द्विपाचितंचदग्धा
न्नंनचाद्याद्वैष्णवव्रती ६३ एतानिवर्जयेन्नित्यंव्रतीसर्वव्रतेष्वपि कृच्छ्राद्यंचापिकुर्वीतस्वशक्त्याविष्णुतुष्टये ६४ क्रमात्कूष्मांडबृहती
छत्राकंमूलकंतथा श्रीफलंचकलिंगंचफलंधात्रीभवंतथा ६५ नारिकेरमलावुंचपटोलंबदरीफलम् चर्मवृंताकजंवल्लीशाकंतुलसि
जंतथा ६६ धात्रीफलंरवौवर्ज्यंसर्वमासेसदागृही शाकान्येतानिवर्ज्यानिक्रमात्प्रतिपदादिषु ६७ एभ्योऽन्यद्वर्जयेत्किंचिद्यद्विष्णुप्रीतयेनरैः
तत्पुनर्ब्राह्मणेदत्वाभक्षयेत्सर्वदैवहि ६८ कार्त्तिकेमासियोभक्त्यादद्याद्ब्राह्मणभोजनम् प्रत्यहंविष्णुतुष्ट्यर्थंसयातिभवनंहरेः ६९ कुरुक्षेत्रेविधाने

का॰मा॰ १४

नतुलापुरुषदानतः यत्फलंलभतेतच्चकार्तिकेवस्त्रदानतः ७१कार्तिकेमासियोमर्त्यःपादत्राणंद्विजन्मने दद्याद्दत्त्वान्वितंसस्तस्यमंनैवपश्यति ७१ यज्ञोपवीतंताम्बूलंसपूगंगंधचंदनं दत्त्वैतद्देवविद्धेषुपुरंदरपुरंव्रजेत् ७२ नारिकेरफलंचैवसरलंवस्त्रसंयुतम् सदक्षिणाद्योदद्यात्सशस्यसुतपौत्रवान् ७३ कर्मणामनसावाचायत्नाद्धर्मसमाचरेत् अस्त्वर्ग्यलोकविद्विष्टंधर्ममप्याचरेन्नतु ७४ पूर्वयैर्नकृतंसतीर्थेगमनंविमानसंतर्पितानहव्यंनैवहुतंहुताशनमुखेनाराधितःशंकरः दत्तंनैवहिरण्यवस्त्रमुदकंगावस्तिलामेदिनीदृश्यंतेः नकुचैलदीनवदनानित्यंनराःदुःखिताः ७५ नविप्रपादोदककर्दमानिनवेदशास्त्रध्वनिगर्जितानि स्वाहास्वधाकारविवर्जितानिश्मशानतुल्यानिगृहाणितानि ७६ यस्यसंगृहिणीभार्याभूद्वीभवतिनारद श्मशानशानतुल्यंतगृहंनैवत्यजेत्कलिः ७७ यन्नवेदध्वनिक्रांतंयच्चगोभिरलंकृतं यन्नरैःपरिवृतंश्मशानसिवतद्गृहम् ७८ भार्याहीनाक्रियेश्मानिशास्त्रहीनाःसुतास्तथा विलीयंतेनसंदेहोघर्मेनस्तुहिनंयथा ७९ भार्याहीनेक्रियानास्तिभार्या परिणयेत्ततः सर्वस्वेनापिविप्रेंद्रकर्तव्योदारसंग्रहः ८० एवमेवहिमाघेचकुर्याच्चनियमान्व्रती भुक्तिमुक्तिप्रदानीह्यानिक्षेत्राणिभूतले ८१ वसंतिनानितद्देहेकार्तिकव्रतकारिणः कार्तिकव्रतिनःपुण्यंयथोक्तव्रतकारिणः ८२ नसमर्थोभवेद्वक्तुंब्रह्मापिचतुर्मुखः ८३॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेसप्तमोध्यायः ७ नारदउवाच अथशौनकवक्ष्यामितिथीनांकृत्यमुत्तमं कार्तिकेकृष्णपक्षेतुत्रयोदश्यांनिशामुखे १ यमदीपंवहिर्दद्यादपमृत्युर्विनश्यति मृत्युनापाशदंडाभ्यांकालश्यामलयासह २ त्रयोदश्यांदीपदानेसूर्यजःप्रियतामिति कार्तिकेमासिकृष्णेचचतुर्दश्यांविधूदये ३ ॥ अवश्यमेवकर्तव्यंस्नानंनरकभीरुभिः तैलेलक्ष्मीजलेगंगादीपमालाचदीपके ४ ततःस्नानंप्रकुर्वीतविधिनानेनयत्नतः अपामार्गमथोतुम्बीतृतीयंचक्रपुन्नकं ५

अ॰ ७

राम॰ १४

पक्षवा॥ ६॥

कल १

॥ सितालोष्टसमायुक्तः सकंटकदलान्वितः हरपापमपामार्गभ्राम्यमाणः पुनः पुनः ६ सप्तवारं समावर्त्य क्षिपेत्तान्यास्यदिग्दले स्ना
त्वा सवस्त्रः प्राद्याद्दीपं तन्मृत्युपुत्रयोः ७ शुनकौश्यावशावलौ भ्रातरौ यमसेवकौ तुष्टौ स्यातां चतुर्दश्यां दीपदानेन मृत्युजौ ८ ततः
प्रभाते विमले देवान्संतर्प्पयेत्पितॄन् मनुष्यांश्च तथा दिव्यान्नामगोत्रपुरस्सरान् ९ रात्रौ दीपाश्च दातव्या देवानामपि तुष्टये चतुर्द-
श्यां दीपदानं हरदुर्गार्थमेव च १० शस्त्रैर्हतानां च तथा पितॄणामक्षयं भवेत् ततो दर्शदिने प्राप्ते सुप्रहृष्टमनास्तथा ११ स्नात्वा देवान्म
नुष्यांश्च पितॄंश्चैवाभितर्प्पयेत् कुर्य्याच्च पार्वणश्राद्धं दधिक्षीरघृतादिभिः १२ भोज्यैर्नानाविधैर्विप्रांस्तोषयेन्निजशक्तितः भेरीमृदं
गपटहवादित्रैः सुमनोहरैः १३ तस्यां महोत्सवः कार्यो दीपावल्यां प्रयत्नतः रात्रौ दीपाः प्रदातव्या गृहे तीर्थे चतुष्पथे १४ आरामे च ग
वां गोष्ठे पितॄणां तृप्तिकारकाः रात्रौ जागरणं कुर्यात्पुराणश्रवणं तथा १५ द्यूतेन वा महेशाग्रे युवतीनां च लीलया श्रिया सार्द्धं जगद्योनिः
शेते विष्णुः सुखान्वितः १६ तस्यां रात्रौ जनैस्तस्मात्संप्रोक्ता सुखसुप्तिका तस्यां धातुमयैर्वर्णैरालिख्य वा सुखरात्रिकम् १७ ब्रह्मविष्णुशिवा
दीनां मूर्त्तीश्च विलिखेत्ततः सुप्रतिष्ठां कारयित्वा द्विजेन सखिभिः सह १८ पूजयेद्गंधपुष्पाद्यैर्मंत्रेणानेन भो द्विजाः सुखरात्रि गृहस्थाया।
देवता सुखदा मम १९ सुखरात्रि नमस्तुभ्यं जीवपुत्रे नमोस्तु ते शिवप्रिये गृहाण मां पूजां मे रक्ष बालकान् २० रूपं देहि जयं देहि पुत्रान्का
मान्सुखं धनम् इति संप्रार्थ्य तां देवीं विप्रान्संतोष्य यत्नतः २१ ततो नीराजनं कर्म कृत्वा लक्ष्मीं प्रपूजयेत् रमार्चनाद्भवान्याहि जितः पू
र्वं महेश्वरः २२ अतः स शंकरो नग्नः सर्वैश्वर्यसुखप्रदः अमावास्याचतुर्दश्योः प्रदोषे दीपदानतः २३ यमलोकान्धकारात्तु मुच्यंते कार्त्ति
के नराः लक्ष्मीर्दैत्यभयान्मुक्ता सुखं क्षीरार्णवोदरे २४ अतः सा विधिवत्कार्य्या मनुष्यैः सुखसुप्तिका दिवा न तत्र भोक्तव्यं विना।६

वालानुरानुजनान् २५ प्रदोषसमयेलक्ष्मींपूजयित्वायथाक्रमम् राजामहोत्सवंकुर्याद्दीपावल्यांविशेषतः २६ ततोऽर्द्धरात्रसमयेस्व
यंराजापुरंविशेत् अवलोकयितुंसम्यक्पद्भ्यामेवशनैःशनैः २७ अप्रवुद्धेहरौस्त्रीभिःपूर्वंलक्ष्मीःप्रवोध्यते यथापतिव्रतानारीब्रह्म
न्लोकेप्रवुध्यते २८ पूर्वंभर्तुस्ततोलक्ष्मींपूर्वमेवप्रवोधयेत् जयदेविजगन्मातर्विष्णुवक्षसिसंस्थिते २९ रमेनमोस्तुतेमेत्रसौभाग्यंदे
हिनिश्चलम् इतिस्तुत्वाभगवतींमहालक्ष्मींवरप्रदाम् ३० भर्त्रासहक्रीडनीयंदीपावल्यांयदृच्छया नदिनंयदिहर्षेणराजयेनैवप्रयातिचेत्
३१ तस्यसंवत्सरंयावज्जयोहर्षोभवेद्ध्रुवम् यामेचतुर्थेनारीभिःसूर्पडिंडिमवादनैः ३२ निःकाश्यतेप्रविष्टाभिरलक्ष्मीःस्वगृहाङ्गणात् अत्रा
प्युदाहृतागाथासत्यधर्मेणकेनचित् ३३ ब्राह्मणेनाथभजताहरंवैसत्यशर्मणा शौनकउवाच सत्यशर्माद्विजःकोवैकागाथाश्रीःकथंपुनः ३४
विवेशतस्यभवनेकथयस्वमहामते नारदउवाच शूरसेनेद्विजःकश्चित्सत्यशर्मासुधीर्वसन् ३५ धर्मार्थेचेष्टतेकर्मतृष्णाव्याकुलमानसःम
मवित्तंयदीहस्याद्धर्मंकुर्यांततःसुखी ३६ पुत्रास्त्रियोलंकृताःस्युर्गृहंकुर्यांमनोरमं एवंमनोरथाविष्णुःसर्वदेवोत्तमोत्तमं ३७ हरिंज्ञात्वा
धनार्थंसपूजयामासभक्तितः एवंचार्चयतोविष्णुंयदायातिधनंक्वचित् ३८ अंतरैवविनश्येत्तसंचयोनाभवत्ततःनिर्विण्णोऽतिविषण्ण
श्चधनार्थंसुमहोद्यमैः ३९ पप्रच्छकोविदंकंचित् ज्ञानविज्ञानसंयुतम् तेनोक्तोधनकामस्त्वंशिवमाराधयाधुना ४० सहरःकामिनः
कामंदत्तेपथ्यमिवामये निःकामैस्तुहरिःपूज्योभजनानंदनिर्वृतैः ४१ सर्वत्रज्ञातवैराग्यैरत्तन्यथानास्तिभोद्विजाइतिश्रुत्वासविप्रा
ग्ग्योयमुनानीरसंश्रयम् ४२ लिङ्गंशिवस्यसंपन्नेपूजयामासचान्वहम् वर्षेप्रसन्नोभगवान्रूपंवैब्राह्मणंदधत् ४३ लक्ष्म्याश्रयार्थंचोवा
चप्रहसन्सत्यशर्मणः गच्छयाचस्वराजानमिदमेववचोमम ४४ दीपावल्याःसमारंभेनागराःसर्वतोदिशम् स्वेस्वेगृहेप्रदीपांश्चमाकु

र्गुनिशिकेचन ४५ तथेत्युक्त्वाययाचेसराजानमिदमेवच राजातुच्छंसमाज्ञाययाचितंब्राह्मणोददौ ४६ तुष्टोविप्रोवरंलब्ध्वाजगामनि
जमंदिरम् अथायातानिशासातुतस्मिन्नहनिभूमिपम् ४७ तद्वचःश्रावयामाससत्यशर्मास्वयाचितम् तदैवराजास्वपुरेसर्वत्राघोषय
द्द्विजाः ४८ अद्यप्रदोषेदीपस्तुनप्रज्वाल्यश्चकेनचित् तेनाद्यस्वगृहंशोभिकृतमस्मैसत्यशर्मणा ४९ दीपमालाकृतारात्रौहर्षगीतादिकौ
तुकं सर्वेषांवेश्मनांलक्ष्मीरंधकारभयार्दिता ५० सर्वत्रानाश्रयालक्ष्मीरंधकारविशङ्किनी तद्वेश्मनिकृतंज्योतिःप्रकाशंप्रविवेशह ५१
हसेनलीलाकमलंगृहीत्वाकान्त्यामनोल्हादकराल्पहासा मनुष्यनारीसदृशाकृतिश्रीर्निषिध्यतेतेनगृहंविशन्ती ५२ वैकुंठेतेपतिभंद्रेप्रा
प्यसन्तोनकस्यचित् त्वंचातिचंचलालोकेसदोषोदस्यतीयुवां ५३ नेहस्थेयंत्वयायाहिवंचयान्याचनहिदः श्रीरुवाच सुतेक्षणेनवैवेदंग
हंचादान्ममाश्रयं ५४ निश्चलानेभविष्यामिप्रवेशंदेहिमेगृहे सत्यशर्मोवाच यदित्रैपुरुषवंशेतिष्ठेमेशपथंकुरु ५५ मदांधंमांचमाकुर्य्याः
स्तिष्ठगेहेनचान्यथा तथेत्युक्त्वाविशद्गेहंसत्यंवैसत्यशर्मणः समृद्धिसंपदामासीद्दारिद्र्यंदूरतोगतं धनेनतेनविप्रोपियज्ञदानतपःकृतीः ५७
चकारविष्णुपूजाश्चवृद्धोवैराग्यमापसः तस्मात्तस्यांनिशायांवैगृहेऽखंडप्रदीपकम् ५८ कार्यंचालंकृतंगेहंश्रीकामैर्गृहिभिर्द्विजाः सर्वाश्रमे
षुगार्हस्थ्यंधन्यंमन्येश्रियान्वितम् ५९ अत्राश्रित्यहकामादीन्दुर्जयान्जयतेपुमान् अन्येषामुपकारायत्रयाणांसाधनंपरम् ६० निष्का
मनान्तथामोक्षंसाधयेन्नात्रसंशयः व्ययेणधनहीनेनकथंसाध्यंभवेदिह ६१ धनात्धर्मान्वर्धयित्वासमुत्पाद्यसुतंनरैः धर्मएवाग्रतः
साध्योह्यन्यथातद्रयोगुणाः ६२ नमोलक्ष्म्यैमहादेव्यैजगन्मात्रेहरिप्रिये त्वांविनाशून्यतांयातिजगद्यत्नविवर्जितं ६३ नारदउवाच इत्येव
मुक्त्वाविप्राग्र्यस्त्यक्त्वागेहंविरक्तधीः प्रवव्राजपुरीमग्र्यांमथुरांप्राप्यभक्तिमान् ६४ तथात्रशुद्धचित्तोसौसमाराध्यसमाधिना हरिंशरणमा

तद्दंश्याघनिनोभवन् ६५ एतद्दीपोत्सवंब्रह्मन्वसिष्ठोऽपिजगादह लीलावत्यैनदाकृत्वामृतासद्गतिमायसा ६६ शौनकउवाच कासा
लीलावतीब्रह्मन्वसिष्ठः कथमुक्तवान् तत्सर्वंब्रूहिदेवर्षेरहस्यंममशृण्वतः ६७ नारदउवाच प्रतिष्ठानपुरेरम्येहस्त्यश्वरथसंकुले नृप
तिर्धर्मनाथोऽभूत्सर्वधर्मनिषेवकः ६८ तस्यराज्येद्विजवरनाम्नालीलावतीमुने वेश्याजनप्रियारम्यारूपौदार्यगुणान्विता ६९ सावसिष्ठा
श्रमंपुण्यंजगामादिष्टयोगतः वसिष्ठमृषिमासीनंप्रणम्यनतकंधरा ७० कृतांजलिपुटाभूत्वाप्राहेदंपुरतोवचः भयानदत्तंनकृतंनोपवासः
व्रतंकृतं ७१ भक्त्यानपूजितःशंभुर्नचलक्ष्मीपतिर्हरिः सांप्रतंतस्यपूजायैधर्मंकिंचिद्वदस्वमे ७२ येनदुःखाब्धिमग्नाहंनिस्तरामिभवार्णवात्
एवंतस्याःसुबहुशःश्रुत्वातुकरुणंवचः ७३ कारुण्यात्कथयामासतामृषिःकौमुदीव्रतम् इत्युक्त्वासमुनिर्धीमान्सुरस्ताच्चतिरोदधे ७४ सापिश्रु
त्वामुनेर्वाक्यंधर्मयुक्तंसुदान्विता लीलावतीचवारस्त्रीदीपमालांचकारह ७५ तस्याःप्रभावेनमनोहरासाभोगाननेकान्बुभुजेमुनीश
विष्णोःप्रभावात्समवापधामसुदुर्लभंस्यादिहयोगिनांच ७६ ॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेकौमुदी
कथनंनामाष्टमोऽध्यायः ८॥ नारदउवाच अतःपरंप्रवक्ष्यामिवलेर्दिनमहोत्सवम् गोवर्द्धनेहरेःपूजांगोमहिष्यादिपूजनं १ पुराकृ
तयुगस्यादौवैरोचनिर्महासुरः एकेनापरिपूर्णानिहयमेधशतानिच २ चकारविधिवच्छक्रपदग्राहीसदक्षिणा ततस्तूर्णंवाजिमेधःप्रा
रब्धःशतशोमुने ३ तेनसंभारमाहृत्यदिवमाहर्त्तुमिच्छता अत्रांतरेभयत्रस्तःशक्रःक्षीरोदधिंययौ ४ निजाधिकाररक्षार्थंबृहस्पतिपुरःस
रः श्रीवासुदेवंतुष्टावपुराणंपुरुषोत्तमं ५ अनादिनिधनंविष्णुमवाङ्मनसगोचरम् जयदेवजगन्नाथजयजन्मजरापह ६ जयकाम
दभक्तानांप्रभोविष्णोनमोस्तुते इतिस्तुतःप्रसन्नात्माशक्रेणमधुसूदनः ७ आविर्भूत्वाहर्षयंस्तंप्रोवाचसपुरंदरम् कच्चित्तेकुशलंशक्रदेव

राजवरस्त्वमे ८ केननेमर्दितोसानोयदर्थंत्वमिहागतः इतिश्रुत्वाहरेर्वाक्यंशक्रःपरपुरंजयः ९ बभाषेकमलाकांतंश्लक्ष्णांमधुरयागि
रास्वामिन्संप्रतिदैत्येंद्रबलिनामत्वरिग्रहे १० कृतोद्यमोवाजिमेधः प्रारब्धोऽस्तिमहीतले तस्मात्वंमत्पदंरक्षभक्तोऽस्मियदिकेशव ११
कर्मणामनसावाचामयियद्यस्तितेकृपा इतिश्रुत्वाजगन्नाथोमृदुवाक्यंबिडौजसः १२ निजगादमरुत्वंतंवैकुंठश्चशतक्रतुम् त्वं
यात्रचिंतानोकार्यागच्छशीघ्रंनिजंपुरम् १३ ततःप्रणम्यविश्वेशंययौशक्रोऽमरावतीम् प्रहृष्यन्निवहृष्टात्मावृहस्पतिपुरोगमः ॥
१४ तस्मिन्गतेद्विजवरवासुदेवोजगत्पतिः वामनंरूपमाश्रित्यगतस्तत्रबलेर्मखे १५ यावत्पूर्णाहुतिस्तत्रनदत्तासाद्विजैर्मुने तावत्
प्रार्थितवांस्तत्रबलिंपृथ्वीपदत्रयम् १६ ततःसोपिपरीक्षांचतस्यकृत्वायथाविधि पात्रंविज्ञायतस्मैतद्दत्तवान्दैत्यपुंगवः १७ क्रमयि
त्वात्रिभुवनंविष्णुःसार्द्धद्वयेनवै पदेनमुनिशार्दूलपुरस्तात्प्रार्थमागतः १८ प्रोवाचबलिराजानंसार्द्धपृथ्वीपदद्वयं प्राप्तंमयासुवंदेहि
मत्वंपादार्द्धसंमितां १९ ततस्तत्परोराजाबलिर्दैत्योऽत्रविष्णवे धरित्रीसंनिभंपृष्ठंददौवैरोचनिर्मुने २० पदमाक्रमतातेनविष्णुना
सगतोबलिः पातालंमुनिशार्दूलनिवसत्यद्यापिदैत्यराट् २१ तुष्टस्यर्थंकार्तिकेनस्यशुक्लायाप्रतिपत्तिथिः साविष्णुनात्रदत्ताहिकौमुदीसं
स्मृताबुधैः २२ कुशब्देनमहीज्ञेयामुदहर्षेततोद्वयम् धातुज्ञैर्निगमज्ञैश्चसैवेषाकौमुदीस्मृता २३ विष्णुरुवाच बलिराजप्र
सन्नोऽस्मितुष्ट्यर्थंतवसांप्रतम् लोकाःसर्वेकरिष्यंतिश्रेयसेकौमुदीव्रतम् २४ मानुषंप्राप्ययेलोकंनकरिष्यंतितेव्रतम् भवितासि
ततस्तेषांभोक्तापुण्यस्यकर्मणः २५ ततःप्रभृतिलोकेस्मिन्कीर्तिनाकौमुदीमुने सर्वोपद्रवराशिघ्नीसर्वशोकापहारिणी २६ सर्वसौख्यकरीपु
ण्यासर्वकल्याणकारिणी पुत्रपौत्रप्रदालोकेसंपूज्यासुखमीप्सुभिः २७ तस्याविधानंवक्ष्यामिशृणुष्वात्रसमाहितः प्राप्तेगोवर्द्धने

कृष्णंपूजयेच्चप्रयत्नतः २८ तत्रगोवर्द्धनःपूज्योमंत्रेणानेनशौनक गोवर्द्धनधराधारगोकुलत्राणकारक २९ विष्णुबाहुकृतोच्छ्रा
यगवांकोटिप्रदोभव गृहस्यमध्येशालायांविशालायांसुपीठके ३० वलिमालिख्यदैत्येंद्रंवर्णकैःपंचरंगकैः सर्वाभरणशोभाढ्यंविंध्या
वल्यासहासितम् ३१ पुत्रपौत्रसुहृद्भ्रातृमित्रस्वजनसंवृतं प्रहृष्टवदनंसौम्यपद्मासंक्तकुंडलम् ३२ पूजयेत्तंविधानेननरोविगत
कल्मषः चंदनागरुकस्तूरीकुंकुमैर्गंधिभिःक्रमात् ३३ कमलैःकुमुदैःपुष्पैःकल्हारैस्तुसुकोमलैः सुफलैर्धूपदीपैश्चनैवेद्यैर्गुडपूप
कैः ३४ अर्चयेद्वलिराजानंमंत्रेणाद्विजसत्तम वलिराजनमस्तुभ्यंविरोचनसुतप्रभो ३५ भविष्येंद्रसुराराते पूजेयंप्रतिगृह्यतां वलिमुद्दि
श्यदीयंतेयानिदानानिमानवैः ३६ नूनंतान्यक्षयान्याहुःशश्वद्धर्मविदोजनाः योयादृशेनभावेनतिष्ठत्यस्यांतुमानवः ३७ सतादृशंफलंविद्या
द्दित्याहपरमेश्वरः तस्मात्प्रहृष्टैःसुप्रष्टैश्चकर्तव्याकौमुदीनरैः ३८ गीतवादित्रघोषैश्चवलिमुद्दिश्ययत्नतः ततोवलेर्गृहद्वारेस्थाप्योगोम
यमूर्तिभृत् ३९ मुनेश्रीवालगोपालस्तथागोवर्द्धनोमहान् वलिराजस्यराज्येऽस्यद्वारपालोभवत्प्रभो ४० निजवाक्यपालनार्थंत्वंसगोवर्द्ध
नगोपते इतिसंस्थाप्यगोपालंभक्त्यासंपूजयेन्मुने ४१ गोपालमूर्तेविश्वेशशक्रोत्सवविवर्द्धन गोवर्द्धनकृतच्छत्रपूजांमेहरगोकुले ४२
ततःप्रहर्षितोराजाकुंडलैःकटकैःशुभैः ग्रामैर्वृषभदानैश्चसामंतोनृपतिर्वरैः ४३ संतोषयेत्पदातींश्चदानसत्कारभोजनैः मंचारूढस्ततः
पश्येत्पदातीन्सकलांश्चतान् ४४ राजपुत्रांश्चारणांश्चमल्लान्नटभटांस्तथा वृषभान्महिषांश्चैवयुध्यमानान्परैःसह गावोविशेषतःपूज्यामंत्रे
णानेनपूजयेत् नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ४६ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ततोऽपराह्णसमयेपूर्वस्यांदिशि
शौनक ४७ मार्गपालींप्रबध्नीयात्तुंगस्तंभेचपादपे कुशकाशमयींदिव्यांकंटकैर्बहुभिर्मुने ४८ भूषयित्वागजानश्वान्गोवृषान्महिषांस्तथा॥

मार्गपालि नमस्तुभ्यं सर्वानंदप्रवर्द्धिके ४९ तलेनवसुखेनाश्वा गजा गावः प्रयांतु नः स्नात्वा नत्सर्वमेवेह पूजां दैत्यपतेर्बले ५० रात्रौ स
वैः पुनः सम्यक् सत्यं द्यूतं समाचरेत् कार्त्तिके मासि शुक्लायां द्वितीयायां मुनीश्वराः ५१ कर्त्तव्यं तद्विधानेन ह्यपमृत्युनिवारणं ब्राह्मे मु
हूर्ते चोत्थाय चिंतयेदात्मनो हितं ५२ कृतनित्यक्रियो हृष्टः कुंडलांगदभूषितः विधिविष्णुं च रुद्रं च संस्थाप्योदुंबरे शुभे ५३ पद्ममष्टद
लं कृत्वा पूजयेत्स्वस्थमानसः पंचोपचारैर्गंधाद्यैर्नारिकेरादिभिः फलैः ५४ सरस्वतीं च वरदां वीणापुस्तकधारिणीम् यजेच्छुक्लांवरधरां ह
सवाहनसंस्थिताम् ५५ ततो मृत्युविनाशार्थं सालंकारां पयस्विनीं विप्राय वेदविदुषे गां दद्याद्वत्ससंयुतां ५६ अपमृत्युविनाशार्थं सं
सारार्णवतारिकां विप्र तुभ्यमिमां रौद्रीं धेनुं संप्रददेह्यहम् ५७ इति वाक्यविचारेण दद्याद्धेनुं द्विजन्मने तदभावे चोदकुंभं सवस्त्रं सहिर
ण्यकम् ५८ तस्याप्यलाभे विप्रेंद्र विप्राय सदुपानहौ दद्यादूर्जेऽथ शुक्लायां द्वितीयायां विशेषतः ५८ ज्ञातिश्रेष्ठान्वयोवृद्धान्विप्रान्शक्त्याभिवाद
येत् नारिकेरादिदानेन तोषयेत्स्वजनानपि ६० ततः स्वोदरसंपन्ना भगिनी या भवेन्मुने तस्या गृहं समासाद्य श्रद्धायुक्तोऽभिवादयेत् ६१ भद्रे भ
गिनि सुभगे त्वदंघ्रिसरसीरुहे श्रेयसेऽद्य नमस्कर्तुमागतोऽस्मि तवालये ६२ इति श्रुत्वा भगिन्यापि भ्रातुर्विनयपूर्वकं मृदुवाक्यं ततश्चास्य सत्कारः
क्रियते महान् अद्य भ्रातर्मतो भ्रातस्त्वत्तो धन्यास्मि मानद भोक्तव्यं तेऽद्य मद्गेहे स्वायुषे कुलदीपक ६४ कार्त्तिके शुक्लपक्षस्य द्वितीयायां
सहोदर यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ६५ अस्मिन्दिने यमेनापि नारकीयास्तु मोचिताः अपिबद्धाः कर्मपाशैः स्वेच्छया पर्यटं
तितैः ६६ तस्माद्भ्रातोऽद्य मद्गेहे भोजनं कुरु कार्त्तिके इति संप्रार्थ्यते भ्राता भगिन्या मंदिरे भृशं ६७ भोजनं यत्नतः कुर्यादायुषे यशसे श्रिये॥
यतो यमद्वितीयायां विश्रुतायां जगत्त्रये ६८ अस्यां निजगृहे विप्र भुज्यते न बुधैरपि अतः स्नेहेन भगिनीहस्ताद्भोक्तव्यमेव हि ६९ शाम्बयमद्वितीया

यांवर्षेवर्षेमुनीश्वराः ततःप्रहर्षात्सुमतेभगिन्यैसुविधानतः ७० स्वर्णालंकारवस्त्रान्नदानसत्कारमादरात् प्रदद्यान्मुनिशार्दूलप्रश्रया
वनतःसुधीः ७१ आशिषंप्रतिगृण्हीयान्नमस्कृत्यसमापयेत् सर्वाभगिन्यःसंतोष्याज्येष्ठानुक्रमतस्ततः ७२ वस्त्रान्नदानसत्कारैर्निजवित्तानुमा
ततः अभावेस्वस्वसुर्भ्रातृर्नूनंसस्वपितुःस्वसुः ७३ मुनेहस्तान्नभुंजीतभोजनंपुष्टिवर्द्धनं एवंकुर्वन्नरोविद्वान्नयातियमयातनां ७४ अपमृ
त्युंनवाप्नोतिसत्यंसत्यंनचान्यथा येभगिन्यःसुवासिन्योवस्त्रदानादितोषिताः ७५ नतेषांवत्सरोयावत्कलहोनरिपोर्भयं व्रतस्यास्यप्रभावेन
भूताःप्रेताश्वराक्षसाः ७६ दूरादेवपलायंतेधर्मराजेनमस्कृते योदेवोमहिषारूढोदंडमुद्गरधारकः ७७ वेष्टितःकिंकरैर्दुष्टैस्तस्मैयाम्या
त्मनेनमः येवैयमद्वितीयायाव्रतंकुर्वंतिमानवाः ७८ सप्तजन्मकृतंपापंतेषांसंक्षीयतेध्रुवं अपुत्रोलभतेपुत्रंधनहीनोधनंलभेत् ७९
भार्याहीनोलभेज्जायांसुरूपांकुलसंभवां यस्यांतिथौयमुनयायमराजदेवः संभोजितःपितृपतिःप्रियसौहृदेन तस्यांभुनक्तिसुतिथौ
हिगृहेभगिन्याः प्राप्नोतिवित्तमतुलंसचदीर्घमायुः ८०॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेनवमोऽध्यायः ९ नार
दउवाच शृणुब्रह्मन्प्रवक्ष्यामिमाहात्म्यंपापनाशनं अक्षयायानवम्यास्तुयज्ञोक्तंचत्रिविष्टपे १ तदहंतेसमग्रंचकथयिष्येतपोधन का
र्तिकस्यचशुक्लस्यनवमीयातिथिर्भवेत् २ अक्षयासातुसंप्रोक्ताव्यासाद्यैर्मुनिपुंगवैः तस्यांयत्करणीयंस्यात्तच्छृणुष्वहरिप्रियं ३ ब्राह्मे
मुहूर्तेचोत्थायचिंतयेदात्मनोहितम् कृत्वानैमित्तिकंकर्मपूजयेदिष्टदेवताः ४ विष्णोःपूजांविधायाथतथापंचोपचारतः प्रदद्यात
न्नैवेद्यंपक्वान्नंसलवंगकम् ५ जीरकंनागरंकृष्णमरिचंदाडिमंतथा नारिकेरफलंचान्यंकूष्मांडंचिंचिणीयुतं ६ संकल्प्यदद्याच्छ्रीकृष्ण
प्रीतयेतत्रशौनक ततआनीयकूष्मांडंपंचरत्नयुतंद्विज ७ तद्धिरण्ययुतंकार्यंबहुद्रव्ययुतंमुने संकल्प्यदेयंविप्रायप्रीयतामित्यथो

ध्वजः ८ स्वशक्त्यातोषयेद्विप्रान्नमस्कारेणवापुनः सूर्यग्रहेकुरुक्षेत्रेतुलादानस्ययत्फलं ९ तत्फलंलभतेमर्त्यस्तस्यांकूष्मांडदान
तः शशिग्रहेतुरेवायांतथाब्रह्मांडदानतः तत्फलंलभतेमर्त्यःकूष्मांडस्यतुदानतः पृथिव्यांयानितीर्थानितेषांस्नानाच्चयत्फलं ११ दानेतु
यत्फलंप्रोक्तंकूष्मांडस्यतुदानतः यावंतिकुरुतेमर्त्यःपापानिमुनिसत्तम १२ यान्तितावन्तिदानेनकूष्मांडस्यविधानतः महापातकयु
क्तोऽपितथाचैवोपपातकैः १३ नरोविशुद्धतामेतियमलोकंनपश्यति कूष्मांडदानकर्तारःसर्वलोकान्व्रजंतिवै १४ स्वेच्छयापर्यटन्त
श्चनानाभोगरताद्विजशौनकउवाच भूलोकेकेनदत्तंहिवदमह्यंमुनीश्वर १५ दानंकूष्मांडकमयंपरंकौतूहलंहिमे नारदउवाच
अंतर्वेद्यांमहाग्रामोयामुनस्यगिरेरधः १६ तत्राभूद्ब्राह्मणोरामशर्मासौलोकविश्रुतः तेनात्यंतंधनंधान्यमर्जितंप्रचुरंकिल १७ पुण्य
कार्यपरोदातावार्द्धकंसमुपागतः तस्यपुत्रौतुसंजातौनाम्नाकृष्णधनंजयौ १८ तयोर्मूर्ध्निगृहंत्यक्त्वाजगामतपसेवनम् तपःक्लिष्टशरी
रोऽसौवासुदेवमनाःसदा १९ प्राप्तवान्वैष्णवंस्थानंयत्रगत्वानशोचति ततस्तस्यसुतौमत्तौश्रियातरुणतांगतौ २० वारस्त्रीरतिभ
संसक्तौमद्यपानरतौसदा नवाक्यंशृणुतोमातुर्वृद्धानांतत्रतावुभौ २१ परस्त्रीभ्यःप्रददतुःसहस्रंचशतंतथा एवंद्रव्यंक्षयंनीतंताभ्यां
क्षणसुखायवै २२ मल्लचारणशैलूषवेश्याद्यूतप्रियेषुवै अपात्रेतद्धनंदत्तमुप्तंबीजमिवोषरे २३ द्रव्यक्षयाद्दुःखितौचौरमार्गा
नुसारिणौ रात्रौतुकोषपालेनधृतौराज्ञाविवासितौ २४ वनंगतौतुवास्तव्यमधर्मेनिरतौद्विज मांसाहारौतुसंजातौसिंहान्मृत्युमुपाग
तौ २५ एकस्मिन्दिवसेब्रह्मन्मृतौयमपुरंगतौ यमदूतोब्रवीद्वाक्यंधर्मराजंवदस्वनः २६ इहानीतौपापरतौकाशास्तिःक्रियतेविभो॥
किंकरस्यवचःश्रुत्वातदावैवस्वतोयमः २७ चित्रगुप्तंलेखमानंनराणांचशुभाशुभं रोषतक्रोधताम्राक्षएतौकुत्रक्षिपाम्यहं २८ चि

का॰मा॰ १९

त्रगुप्तोऽब्रवीद्वाक्यं किंकरान्शूलधारिणः एकश्च नीयतां स्वर्गे यत्र भोगाश्च शाश्वताः २९ अपरः क्षिप्यतां दूता नरके यातनाकुले चित्रगुप्तव
चः श्रुत्वा तदा दूतः प्रियंवदः ३० गृहीत्वा धनंजयं तुष्टः स्वर्गमार्गमुपागतः ते दूताः पापकर्माणं गृहीत्वा कलशर्मकं ३१ नरके पातयन्क्रुद्धा
भुं स्वकर्मकृतं द्विज धनंजयो व्रजन्मार्गे पश्यन्वै चित्रमद्भुतं ३२ अप्सरसस्तदागत्य अर्चयंत्यो महामुने पारिजातकृतां मालां शिरसि
प्राक्षिपन्मुदा ३३ इति दृष्ट्वा तदाश्चर्यं स्वर्गमार्गस्य शौनक पृष्टवान्यमदूतं स तदा सकरुणं वचः ३४ धनंजय उवाच एका माता पिता चै
कस्ताभ्यां जातौ सहोदरौ पापमेव कृतं ताभ्यां न वा तौ पुण्यकर्मणः ३५ एकस्मिन्दिवसे दूत मृतौ यमपुरीं गतौ कथं स नरके क्षिप्तो मम ज्येष्ठः
प्रियंवदः ३६ मम भावी कथं नाक एतन्मे छिंधि संशयं यमदूत उवाच पिता माता स्वसा भ्राता पितृव्यश्च धनंजय ३७ अदृष्टकर्मजास्तज्ञा
जन्मकर्मोपभुक्तये यथैकस्मिन्पादपे तु शकुनीनां समागमः ३८ पुत्रभ्रातृपितॄणां च तथा भवति संगमः तस्मान्न चिंता कर्तव्या व्रजमार्गेसु
रस्य वै ३९ पुण्यवांस्त्वं सुकृतिनां लोकं गंतासि मोऽस्तु ते धनंजय उवाच केन पुण्येन मां दूत नयसे त्वं त्रिविष्टपं ४० पापिष्ठो मत्परो ना
न्यो भविष्यति धरातले तस्य तद्वचनं श्रुत्वा यमदूतोऽब्रवीद्वचः ४१ यमदूत उवाच पाठकस्य प्रसंगेन गतस्त्वं यमुनां किल वाससी च गु
रोर्गृह्य कुशाग्रसमिधस्तथा ४२ आचार्यस्याज्ञया स्नानमूर्जे प्रातः कृतं त्वहं निमज्जनद्वयात्तत्र संजातं ते महत्फलं ४३ एकेन मज्जनेनाशु
पापान्मुक्तोऽसि जन्मनः मज्जनेन द्वितीयेन त्वमक्षयं स्वर्गमाप्नुहि ४४ नरके च तव भ्राता सहतां यमयातनां इति श्रुत्वा वचस्तस्य भ्रातृगौरवय
न्त्रितः ४५ धनंजय उवाच देवदूतं प्रणम्याहं मैत्रीं सप्तपदीं स्मरन् निर्गमं नरकाद्दूत भ्रातुर्मे जायते कथं ४६ यथाहं भ्रातृसंगेन स्वर्गया
मि प्रियंवद न भ्राता हि समो बंधुर्न भ्राता हि समं सखा ४७ न भ्राता हि समं मित्रं मातृजातं विशेषतः स्वर्गच्छामि विना तेन तत्र मे कार्यनिर्वृतिः

जा॰ १०

राम॰ १९

४८ यथाभ्राता हि संयोगस्तमुपायं वदस्व मे इति श्रुत्वा वचस्तस्य देवदूतस्ततोऽब्रवीत् ४९ देवदूत उवाच पूर्वजन्मकृतं पुण्यं तद्ददस्व
धनंजय दानं नवम्यां कूष्मांड सूर्जे शुक्ले तिथौ द्विज ५० सहिरण्यं त्वया दत्तं सरत्नं च सवस्त्रकं देहि पुण्यं च तज्ज्ञात्रे दुःप्राप्यं स्वर्गिणाम
पि ५१ इति श्रुत्वा वचस्तस्य देवदूतस्य सादरं ददौ कूष्मांडदानस्य पुण्यं भ्रात्रे धनंजयः ५२ पुण्यदानेन कृच्छ्रोऽपि नरकान्निर्गतस्तदा भ्राता
सह द्विजवरः प्राप्तवान्वैष्णवं पदं ५३ भोगोपभोगसंपन्नौ यमदूतविवर्जितौ अद्यापि तौ द्विजवरौ पुण्यशीलसुशीलकौ ५४ कृतभक्तौ भवेतां
वैकुण्ठाराधनमीयतुः नवम्यां कृष्णमुद्दिश्य शुक्लपक्षे विचक्षणौ ५५ कार्तिके मासि कूष्मांडं सहिरण्यं सरत्नकं कूष्मांडकस्य दानेन तार्य
ते कोटिपूरुषं ५६ एतत्ते कथितं विप्र कार्तिके नवमीव्रतं कूष्मांडदानमाहात्म्यं यच्छ्रुतं यमदूतकैः ५७ प्रबोधिन्यास्तु माहात्म्यं पापघ्नं पुण्यवर्द्धनं
भुक्तिदं सुबुद्धीनां शृणुष्व मुनिसत्तम ५८ तावद्गर्जंति विप्रेंद्र गंगाभागीरथी क्षितौ यावन्नायाति पापघ्नी कार्तिके हरिबोधिनी ५९ अश्वमे
धसहस्राणि वाजपेयशतानि च इत्यान्यैकोपवासेन प्रबोधिन्यां भवंति हि ६० पूर्वजन्मसहस्रेषु यत्पापं समुपार्जितं जागरे प्रबोधिन्यां द
ह्यते तूलराशिवत् ६१ विधिदिष्टं तु यत्कर्म करोत्यविधिना तु यः तत्फलं न समाप्नोति क्लेशमात्रं हि तस्य तत् ६२ विधिहीनं तु यो विप्र करोति सुकृतं
नरः मेरुतुल्यं फलं तस्य लभते नात्र संशयः ६३ इति संचिंत्य संचिंत्य शश्वन्नरकभीरुभिः कर्तव्यो वैष्णवैर्भक्त्या जागरो हरिवासरे ६४ एकादश्यास्तु
रीयांशो द्वादश्याः प्रथमस्तथा हरिवासर इत्येतन्मानमुक्तं महर्षिभिः ६५ तस्या विधानं वक्ष्यामि यथोक्तं ब्रह्मणा पुरा ऊर्जे दशम्यां संप
स्य भूमिशायी भवेन्नरः ६६ आचांतः सुप्रसन्नात्मा हविष्यान्नं सुसंस्कृतं रात्रौ तु पश्चिमे यामे समुत्थाय यथाविधि ६७ शौचादिकं च कृत्वास
उपविष्टः प्रसन्नधीः स्पृष्ट्वांगानि तथा द्विष्ट्वा चिरं ध्यायेज्जनार्दनं ६८ अतसीपुष्पसंकाशं कमलाक्षं चतुर्भुजं शंखचक्रगदाशार्ङ्गपीतवस्त्रं कि

का॰मा॰
२०

रीदिनं ६९ प्रसन्नवदनंध्यायेत्सर्वलक्षणलक्षितं भानूदयेवाविह्लतोगृह्णीयान्नियमंततः ७० एकादश्यांनिराहारंस्थित्वाचैवापरेहनि
भोक्ष्येहंपुंडरीकाक्षशरणंमेभवाच्युत ७१ एवमुक्त्वाततःसम्यङ्नित्यकंकर्मधर्मधीः समापयेद्विधानेनविष्णुंसंपूजयेन्मुने ७२ प्रसुप्तंबो
धयेद्रात्रौनृत्यगीतादिवाद्यकैः वासुदेवकथाभिश्चश्रद्धाभक्तिसमन्वितः ७३ ब्राह्मणाःपूजनीयाश्चवैष्णवाद्याश्चमूर्तयः मंत्रेणानेनगोविंद
मभयंबोधयेद्बुधं ७४ महेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदितपादपद्म बुध्यस्वदेवेशनिवासमत्रकुरुष्वभावेनसुखेनदेव ७५ इ
यंचद्वादशीदेवप्रबोधार्थंविनिर्मिता त्वयैवसर्वलोकानांहितार्थंशेषशायिना ७६ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते त्वयानोत्थी
यमानेनउत्थितंभुवनत्रयं ७७ समुत्थितेततोविष्णौक्रियासर्वाप्रवर्तते उत्थितेदेवदेवेशेजागरेणानयेन्निशां ७८ तस्यांरात्र्यांव्यतीता
यांद्वादश्यामरुणोदये आरोग्यतैलस्नवेनमधुनास्नापयेद्धरिं ७९ ततोदध्नास्नपयेत्पानीरेणाचततःपरं ततस्तुविधिवत्स्नात्वाभोजयित्वा
द्विजोत्तमान् ८० अन्नप्रस्थततोदद्यात्स्वशक्त्यात्किंचिदेवहि ततस्तुकलशादेयायथाप्राप्ताःस्वलंकृताः ८१ जातीपल्लवसंयुक्ताःसफलाश्च
सकांचनाः चातुर्मास्यव्रतानांचकृत्वात्वच्छिद्रवाचनं ८२ चातुर्मास्येकार्त्तिकेचनियमोयस्ययःकृतः कथयित्वाद्विजेभ्यस्तंदद्याद्दत्वासद
क्षिणं ८३ दत्वाविसर्जयेद्विप्रंततोभुंजीतचस्वयं व्रतावसानेमंत्रश्चपठनीयोहिशौनक ८४ इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो न्यूनं
संपूर्णतांयातुत्वत्प्रसादाद्रमापते ८५ जागरस्यहिमाहात्म्यंगीतवादित्रनर्तनात् हरेःप्रीतिकरंरात्रौवक्तुंनैवात्रशक्यते ८६ यत्प्रभावा
च्चंद्रकांतिःकृष्णसंगमवापह शौनकउवाच काचंद्रकांतिःकुत्रासीत्कथंजागरणंकृतं ८७ वदविस्तरतःश्रोतुंत्वन्मुखादुत्सुकावयं ना
रदउवाच पूर्वमन्वंतरेचासीत्पांचालेषुमनोरमं ८८ हरेरायतनंराज्ञाकृतंप्राचीनवर्हिषा तत्रोत्सवाःप्रतिदिनंपूजाविष्णोर्महाधनाः ८९ अभवं

जा॰
१०

राम
२०

स्तत्रदानंचनृत्यगीतादिमंगलं यथाप्रतिष्ठितासाचप्रतिमावैमनोहरा ९० यस्याहरिःसन्निधत्तेकोटिकंदर्पसुंदरः तत्रासीन्नृत्यनिपुणा
वेश्यादेवांगनोपमा ९१ चंद्रकांतिरितिख्यातासर्वलोकविमोहिनी यदातस्याःसमारंभोनृत्यस्यहरिसन्निधौ ९२ विशेषतःसमायांतिज
नाःशून्यंभवेत्पुरं कदाचित्कार्तिकेमासिप्रबोधिन्यांप्रजागरे ९३ ननर्तसविशेषंसापश्यंतीप्रतिमांहरेः तत्रकृष्णस्यसान्निध्याद्रूपशृंगारमोहि
ता ९४ कृष्णप्रीत्याद्रवच्चित्ताचित्तेचैतदचिंतयत् अपिनारायणःसाक्षादयंनाद्भुतरूपवान् ९५ मयासहैवंनृत्येनकथंसंभाव्यतेत्विदं इ
त्थंमनोरथंबालाकुर्वतीनृत्यमुत्सुका ९६ प्रीत्याचसर्वांतांरात्रिमेवंनृत्यैरिवाहूयत् ततःप्रातश्चतत्पुण्यंजागरस्याक्षयंह्यभूत् ९७ तस्मि
न्मनोरथंकाम्यंयच्चकाराथनृत्यती ततःसाकतिभिर्वर्षैस्तत्रन्यस्त्वाकलेवरं ९८ चित्तंहित्वाखिलंस्वर्गंगत्वादेवांगनाभवत् तत्रापिगी
तनिपुणानृत्याभिनयकोविदा ९९ रेमेरम्येविमानाग्रेरूपयौवनशालिनी एकदास्फाटिकेकुड्येरूपंस्वंददृशेंऽगना १०० चिंतयामासमे
रूपंसंयोग्यंनैवकर्हिचित् इत्युदीरितमात्रेतुपूर्वजन्ममनोरथं १०१ सस्मारसातुतन्वंगीविष्णुनासहनर्तनं नपतिंकामयामासब्रह्मचर्ये
स्थिराभवत् १०२ नामेवमूर्तिंध्यायंतीचंद्रकांतिर्वरांगना कृष्णगाथांप्रगायंतीरोमांचोद्भेदलक्षणा १०३ एतदंतरमेवासौभूमिर्भारप्र
पीडिता भूमेर्भारावतारार्थमवतीर्णोजगत्प्रभुः १०४ कृष्णक्रीडार्थमादिष्टाब्रह्मणासुरयोषितः राघवस्यावतारस्यएकभार्याव्रतंमहत् ॥
१०५ आसीत्तदत्रतत्प्रीत्यैसंभवंतुसुरस्त्रियः कैशोरेगोपकन्यास्तायौवनेराजकन्यकाः १०६ भूत्वादेवांगनासर्वाजनयंतुमुदंहरेः इत्याज्ञ
प्ताचंद्रकांतिर्वव्रेपूर्वमनोरथं १०७ वहुष्वन्यासुकांतासुदिव्यमोहनरूपधृक् मयासहप्रीतिमांश्चनृत्यतांभगवान्हरिः १०८ तथेत्युक्त्वावतारा
र्थंब्रह्मणाश्वसमादिशत् वृषनाभःसखाह्यासीच्छ्रीभानुरितिविश्रुतः १०९ चंद्रकांतिस्ततःपुण्यागोपःकोपिव्रजेस्थितः तस्यकन्यावरारोहा

प्रभावत्याख्ययाभवत् ११० यार्चंद्रकांतिरित्यासीदित्येतत्कथितंमया सुबोधिनीजागरपुण्यवैभवात्समन्नर्ईशो विधिवाक्यसत्यकृत् १११
चकाररासोत्सवनर्तनंतयावृंदावने॰न्याभिरपीहमाधवः व्रजेप्रियत्वमाविष्णोराधिकागोपिकासुच ११२ कार्तिकेपूजनीयाचश्रीदामोदर
संयुताद्विजंदामोदरंकृत्वातत्पत्नींराधिकांतथा ११३ कार्तिकेपूजनीयौतौसालंकारैश्चभोजनैः वृंदावनाधिपत्यंचदत्तंकृष्णेनतुष्यता ११४
त्वत्कुंडेकार्तिकेष्टम्यांस्नातायाद्देकादशीतिथौ इत्येवकथितंसर्वयत्पृष्टो॰हमिहत्वया ११५ ॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मना
रदसंवादेदशमो॰ध्यायः १० ॥ नारदउवाच अतःपरंप्रवक्ष्यामिसुनयोभीष्मपंचकं यथावर्षसहस्रंतुसमभ्यर्च्यजनार्दनम् १ पुराप्राप्तंव्रतमिदं॰
सर्वयज्ञफलप्रदं एकादश्यांतुगृण्हीयाद्व्रतंपंचदिनात्मकं २ व्रतीस्नात्वाविधानेनमध्यान्हेतुयथापुनः गृह्णीयाच्चकुशैःस्नानं देवानांचैवतर्पणं ३
धौतवासाश्चमौनेनहरिमर्चेज्जितेंद्रियः भूमिशायीतथाखंडदीपान्पंचस्वहःस्वपि ४ नमस्तेदेवदेवेतिजपेदष्टोत्तरंशतं पूजांतेचार्घमावे॰
द्यजुहुयात्तिलसंयुतं ५ घृतपायससंमंत्रेणासुविधानकृतेनच पूजाविधौविशेषश्चदिनेष्वेवचपंचसु ६ प्रथमेदिवसेपद्मैर्हरेःपादौप्रपूज
येत् द्वितीयेबिल्वपत्रैश्चजानुनीचतृतीयके ७ आनाभिजानुतःपत्रैस्तुलस्याःपूजयेद्धरिं बाणबिल्वजवैश्चैवततःस्कंधौप्रपूजयेत् ८ जातीपु
ष्पादिभिर्गंधैर्मालतीकुसुमैःशिरः एकादश्यामथाभ्यर्च्यमंत्रवद्गोमयंपिबेत् ९ द्वादश्यांचगवांमूत्रंत्रयोदश्यांतथापयः चतुर्दश्यांघृतंप्रा॰
श्यंपौर्णमास्यांतथादधि १० पंचस्वपिदिनेष्वेवविधिवत्स्नानमाचरेत् पंचमेदिवसेविप्रान्सादरंभोजयेद्व्रती ११ पायसेनापिपक्वान्नेकृत्वातद
पिपंचधा नंदायांकांचनंदत्वाद्वादश्यांव्रतमुत्तमं १२ गोदानंचत्रयोदश्यांरिक्तायांघृतपायसं सितासिततिलांश्चैवपूर्णायांतुद्विजोत्तम १३ द
त्वावेदविदेस्वर्णसहितान्हरितोषकृत् गात्राभ्यंगंशिरो॰भ्यंगंमधुमांसंचमैथुनं १४ तांबूलान्नतवादादिदंतधावनंवर्जयेत् षष्ठे॰ह्यदिवसेछि

द्वंवाचयित्वाथ्यबंधुभिः १५ विप्रशेषान्नभोजीस्याद्भीष्माहःसुचपंचसु दद्यादर्घ्यंविधानेनमंत्रेणानेनशौनक १६ सत्यव्रतायशुचये गां
गेयायमहात्मने भीष्मायचददाम्यर्घमाजन्मब्रह्मचारिणे १७ वसूनामवतारायशंतनोरात्मजायच अर्घंददामिभीष्मायसोमवंशोद्भवायच
१८ वैयाघ्रपदगोत्रायशांतनुप्रवरायच अनपत्यायभीष्मायतस्मैदद्याज्जलांजलिं १९ सर्वेणानेनमंत्रेणतर्पणंसार्ववर्णिकं द्वापरस्ययुग
स्यांतेप्रोक्तंकृष्णेनपृच्छते २० भीष्मायचकृतंतेनतन्नाम्नाप्रथितंभुवि शौनकउवाच कदाससङ्गतिस्तेनगांगेयस्यमहात्मनः २१ कृष्णेनसह
देवर्षेकदापृष्टश्चकेशवः नारदउवाच यदात्वगाद्दौत्यविधौकुरून्हरिर्विभुः पृथासूनुभिरीरितश्च २२ गृहंगतोविदुरस्यातिथेयंसशंकितःप्राप
महाप्रमोदं अहोअयंकारुणिकोवतेश्वरस्त्यक्त्वामहाराजगृहंमहोदयं २३ यदेषदासीतनयंकुलाधमंमामग्रहीदात्मतयाकृतार्चनं सज्जनः
जातिर्नचपंडितत्वंनवाधनित्वंनचशूरताच २४ सर्वेगुणाअस्यनतोपकारणंप्रेमैवकारुण्यनिधिःप्रवर्तते इत्यानुरागहृदयोविदुरस्त
दीयपादावनेजनकरोरपआचचाम २५ दध्रेशिरस्यथशिवोद्रुहिणादयश्चयद्धिङ्घ्रिनाप्यमलवेनसएकपत्यं उपविष्टंकृतातिथ्यंश्रुत्वाभीष्मोम
हामनाः २६ जगामहरिसान्निध्यंतद्दर्शनसमुत्सुकः भीष्ममागतमालोक्यप्रीत्यावैयदुनंदनः २७ समुत्थायाभिवाद्याथबाहुभ्यांपरिषस्वजे उपवि
श्यासनेस्वेस्वेकृष्णभीष्मौपरस्परं २८ पप्रच्छतुःशिवंप्रीतौकथयामासतुःकथाः भीष्मउवाच यद्भ्रूविजृंभपरिरंभसमाकुलासौविश्वंकरोतिवि
करोतिचहंतिमाया २९ ब्रह्मादयोयमिहवेदितुमीशतेनसोयंप्रयातिकुरुदौत्यकरोविचित्रे भगवन्निदंमहच्चित्रंचित्तेनःप्रतिवर्तते ३०
साम्येनवर्तमानोऽपिजीविनांयःसुहृत्सखा अप्यन्यैःसेव्यमानोयमेषांदौत्यकरःस्वयं ३१ बंधुस्त्वंचगुरुस्त्वंचसुहृत्त्वंशंकराश्रयं मंत्रित्वंका
र्यकारित्वंकरोषियदुनंदन ३२ तत्कथ्यतांकारणंभोकिमेभिर्वशगःकृतः श्रीकृष्णउवाच गंगाधरमहाभागनप्रष्टव्यमिदंत्वया ३३

का

भा: गोपनीयमिदंगुह्यंभक्तियोगेनवश्यकृत् भीष्मउवाच त्वदाराधनधर्मश्चकतिधासवतोदितः ३४ दंभहिंसादिदोषैश्चह्यधर्मःप्राणिनामुत जा

१२ धर्मेश्वावश्यकोलोके विघ्नबाहुल्यसंगतः ३५ नमतीत्यमभवेत्किंवानद्कुंत्वमिहार्हसि नारदउवाच तेनैवभीष्मेणतदायदाहरिःपृष्टस्तुलोकस्यहि ११

तायचाह ३६ संसारिणांजन्ममृत्यादिदुःखंविद्दंद्यासिंधुरमांविभक्तिः श्रीकृष्णउवाच अवंतीसंभवाःपंचपूर्वकल्पेद्विजोत्तमाः ३७ कविःसु

विर्देढोदांतोहंसोनामतथैवहि वेदविद्यासुनिपुणारूपयौवनशालिनः ३८ गंधर्वविद्यामाधीत्यपंचैवातिमनोहराः सांगीतकंपाठयं

तिकंठैःकिंनरगीतयः ३९ एकदाचसुवीरस्यराज्ञोमधुपुरींविभोः श्रुत्वासंगीतनिनदंसमायातादिद्दक्षवः ४० स्नात्वातीर्थेतथोपोष्यस्थित्वा

दिनचतुष्टयं राज्ञएवांभोग्यपत्नीनाम्नाकादंबिनीवरा ४१ संगीतविद्यानिपुणारागकंठस्तुकिन्नरी स्त्रियएवहितांबालांनर्तयंतिनृपाग्रतः४२

द्रष्टुंनप्राप्यतेतस्यानृत्यमन्यैःकथंचन यतस्तच्छ्रूयतेवाद्यंनृत्यंनालंसुगीतकं ४३ तत्रगत्वासुविविशूराज्ञोदर्शनकांक्षिणःश्रुत्वासम्यग्ध्वा

निंविप्राःपप्रच्छुःकंचनांतरं ४४ विप्राऊचुः अहोवनात्रसान्निध्येराज्ञोनास्यास्तिकोविदःसंगीतज्ञायतोनृत्यवाद्यस्यापितथाद्दत्ता ४५ द्विवि

तस्यंतरंतात्तकर्तव्यंनचविद्यते तंत्रीद्वयंतुशिथिलंकिंनरीवस्ततेपरं ४६ तालंचपार्श्विनादत्तमित्याहुसंसभाशठं तच्छ्रुत्वाराजसा

न्निध्यंगत्वाराज्ञेन्यवेदयत् ४७ तच्छ्रुत्वापंचतेविप्राःसमाहूतागृहांतरे प्रविष्टास्तत्रयत्रासीनाम्नाकादंबिनीस्थिता ४८ राज्ञश्चाशि

ष्यआवेद्यविविशुस्तत्रचासने तेषांचविज्ञायविशेषविज्ञनांविशेषतः सारभताथनर्तनम् ४९ तद्गीतलास्याभिनयैर्मनोहरैःकृतास्त राम

द्दैकाग्रधियःसभासदः इत्येवमालोक्यतदीयमद्भुतंरूपं गुणांस्तेगुणिनोविमोहिताः ५० साचापितेषांगुणविज्ञतांपरंरूपंमनोहारिचजानतां २२

तिउत्थितेराज्ञितेचापिकृष्णाज्ञाज्ञोगृहाद्बहिः ५१ गताःसापिसलज्जाकादंबिनीविरहातुराराजभीत्यागृहांतस्थावभूवविमनाभृशं ५२ततो

इत्यादिवचनैरात्मसात्तान्मनःप्रियान् एकैकोवीरहोविद्याःसर्वशोमेप्रयच्छतु ५३ नगरस्यापरेभागेयमुनायास्तटंमहत् अनंततीर्थवि
ख्यातंतत्रदेवालयोरहः ५४ नगराद्दूरतोरम्यंनिर्जनंवनवेष्टितं तत्रगच्छेद्भवत्स्वेकोथास्येहंछलवेषधृक् ५ वीणांरागस्तन्नृत्यस्यदर्श
यिष्यामिकौतुकं भवंतोऽपिक्रमेणैवदर्शयंतुस्वकंगुणं ५६ सहैवगमनेराज्ञोज्ञाताःस्युस्तद्धिहेकलः भवताकोपिगच्छेतेत्युक्तंदूत्या
तदीप्सितं ५७ एवमुक्त्वातुसादूतीगताराजगृहंपुनः तेकौतुकसमाविष्टास्तत्संयोगायसत्वराः ५८ तेषांविवदतांतत्रसमायातःप्रियःसखा॥
वेदवेदांगवित्कश्चित्कृतातिथ्यश्चतैःपुनः ५९ ज्ञात्वासंविदमारोग्यंपप्रच्छस्तेकुतूहलात् विप्राऊचुः सखेराज्ञोभोग्यपत्नीसमासक्तास्ति
नोगुणैः ६० भवदग्रेचनोगोप्यमस्तितत्वन्नतोवद इतितेषांवचःश्रुत्वासखातेषांमहाभिषक् ६१ उवाचवचनंतथ्यंहितंपथ्यंसुहृ
त्तया विप्रापरस्त्रियंप्राप्यमात्तबुद्ध्याभजंतिये ६२ तेसम्यक्कथितादेवैःस्वर्गवासंवसंतिनि येस्वकीयांपरित्यज्यस्त्रियंदेवाग्निसाक्षिकीं ६३
भजंतिकामुकाःप्रीत्यातेयांतिनरकंकिल राज्ञएषाभोग्यपत्नीविशेषाज्ज्ञानकोविदाः ६४ नतामर्हथभोविप्रागंतुंकामितयाबुधाःस्त्रियो
भवद्भिःसंत्यक्ताःकुलीनास्तरुणीःशुभाः ६५ पितरस्त्वसिमायांतियत्सुतैर्जातमात्रकैः नताःकथंचनत्याज्याःप्रेत्ययानत्यजंतिहि ६६हि
तंभार्य्यादरिद्रेऽपिविपत्स्वपिहितंसदा ज्ञानवान्यस्त्यजेत्तांहियास्वीमरणस्यतु ६७ धिग्धिगित्येवयांलोकावदंतिपुरुषाधमान्जी
वंतोऽपिमृतास्तेस्युर्येपरस्त्रीरतानराः ६८ मानुष्यंप्राप्यदुष्प्राप्यंयेत्यजंतिनराःस्त्रियं चिंतामणिंकरेप्राप्तंत्यक्त्वाकाचंसमालभेत्॥
६९ इत्येवमुक्त्वाविप्रांस्तेयदातद्वाक्यमुत्तमं नचक्रुश्चतदासोपिजगामचययेच्छकं ७० कविप्रभृतयस्तेऽथकामाशक्तेंद्रियव्रजाः
॥ कादंबिन्यानृत्यगीतेसंस्मरंतःस्थितास्तदा ॥ ७१ ॥ ॥ इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येब्रह्मनारदसंवादेपंचभीष्मेएकाद

शोऽध्यायः ११ ॥ ब्रह्मउवाच तस्मिन्कालेतुगांगेयमुनिरेकोमहानभूत् ऋतधामेतिनामास्यवेद वेदांगपारगः १ मथुरामाश्रितोदूरंव
नेनिष्ठत्यहर्निशं नैष्ठिकोब्रह्मचारीचमदाराधनतत्परः २ भिक्षार्थमपिनायातिपुरंदुःसंगशंकितः भीष्मपंचदिनेष्वेषुतस्मिन्देवालये।
शुभे ३ ममपूजांप्रकुर्वाणोव्रतमेकंचकारसः तेषुपंचसुविप्रेषुकविर्नामजगामह ४ एकादश्यांरहस्तस्यानृत्यरागदिदृक्षया आदौ
गत्वामुनेःपार्श्वेकविर्दृष्ट्वाविधिंततः ५ पूजयामासविधिनामांतेनैवसमाहितः ततःक्षणेनाथयानारामाकादंविनीतदा ६ मुनिंनत्वा
चपूजादिदृष्ट्वापूजांसमग्रहीत् मत्प्रीतियुक्तचित्तेनसविशेषंजगौतदा ७ ऋतधाम्नस्तुतेवाणींमधुराक्षरसंमितां तस्यसंगतिमासाद्यमह
तोऽपितयोस्तदा ८ मनःशुद्धिरभूत्कामोमङ्क्षुनयात्तुनयेनतः रात्रौजागरणेनृत्यंकृत्वाकादंविनीकविः ९ वीक्ष्याथगायतोऽग्रेमेद्रुतचित्तोज
हर्षसः गोमयाचरणंतेनदृष्ट्वाचमुनिनाकृतं १० कविनापिकृतंपश्चात्प्रातःसंज्ञानपालनं कविरागात्यनगरंस्वंधनंभूषणानिच ११
द्वादश्यामददात्सर्वंविरतोभक्तिहृद्वये द्वितीयेदिवसेप्रागाच्छुचिस्तस्यादिदृक्षया १२ द्वादश्यांप्रातरेवासावासीनंददृशेमुनिं तेनापि
पूजितोऽहंवैशुचिनामुनिसंगमः १३ तथैवगीतनृत्यादिभक्तिरस्याप्यजायत गोमूत्रंतेनपीतंस्वदृष्ट्वाचप्रसन्नंमुनिं १४ वचनादृततात
त्रददृशेतांमनोहरां सातस्यददृशेनृत्यंगीतंपश्चात्स्वयंतथा १५ चक्रेस्वकीयलावण्यंगांधर्वंशुचयेर्पयत् पूजनान्मेव्रताच्चापिमुनिसं
गतितःशुचिः १६ विरक्तइंद्रियार्थेभ्यःसर्वस्वमददात्प्रभुःइदंचोवाचवचनंमङ्क्षुनामनसाप्रिया १७ अहोमोहस्यमाहात्म्यंविषयासक्तचेतः।
सां यत्सेवयामहानंदरसमग्नाविदंतिनः १८ संसारदुःखजंतापंनापेक्षंतेस्वशक्तितः तंहरिंहृदयस्थंचत्यक्त्वान्येमृगतृष्णिकां १९
धावंतेहिततःकिंतुमहद्दुःखकरंपरं तथापितादृशींवालांनृत्यगीतमनोहराम् २० दृष्ट्वापिनाभवत्क्षोभोमहानंदयुतोमुनेःतस्मात्तुस्तज्य

स्वंसर्वतोजगदीश्वरे २१ कुर्यात्प्रेमभवांभक्तिमेकएकजनस्त्विनौ एवमेवत्रयोदश्यांदृढोऽगात्तद्दिदृक्षया २२ मुनिनातत्रसंगात्यपूजा
यांदत्तचेतनः पयःपीत्वामुनेःशेषंरात्रौभक्तिपरायणः २३ तस्यानृत्यंचगीतंचदृष्ट्वारागविवर्जितः शुचेर्वचनमाकर्ण्यगतस्तीर्थांतरंप्र
ति २४ दत्वासर्वस्वदानंचममभक्तिपरायणः चतुर्दश्यांगतोदांतोमुनिसंगतितस्तदा २५ नृत्यगीतोत्सवंकृत्वाममपूजांविशेषतःमु
निशेषंघृतंप्राश्यशुद्धसत्वोऽभवत्क्षणात् २६ तस्यागुणांश्चरूपंचदृष्ट्वायापिविरक्तिमान् तथैवोत्थायदत्वाचदानंसर्वसमर्पणं २७ नि
ष्किंचनोभक्तियुतोगतस्तीर्थांतरंप्रति पौर्णमास्यांततोहंसोदृष्ट्वासीनंमहामुनिं २८ नत्वास्नात्वातटेनत्वाधात्रीछायांसमाश्रितःतेभ्यश्चा
भ्यधिकोभूत्वाततोऽगान्मुनिसन्निधौ २९ तथैवमुनिसंगत्वात्मत्पूजानर्तनंकृतं सचक्रेतांददर्शाथततयामोहितोह्यभूत् ३० दधिम
थ्याथमुनिनासहैवासीद्विरक्तधीः दत्वासर्वस्वमत्रैवगतस्तीर्थांतरंप्रति ३१ कादंविन्याःश्रुतंराज्ञागमनंविष्णुमंदिरे निगृहीतापुनर्देवं
तुंदेवालयंवलात् ३२ शुचिस्तुदद्यात्सकलंस्वमागात्पुनर्मुनेर्कृतधाम्नोविशुद्धःतस्मिन्वनेकृतवासस्तथैवमदीयमाराधनमाचकारसः ३३
क्रमेणपंचभिर्विप्रैःकृतमाराधनंमम मथुरायांचगांगेयतैरेवमुनिपुंगवैः ३४ मदीयःपूर्वकल्पेंऽशःकृतधामाभवत्पुनःनारायणइतिख्या
तोवदर्यांतपआस्थितः ३५ कविनामानरोजातोनारायणसहायवान् सएवपूर्वदानेनलेभसेंद्रपदंशुभं ३६ यंचानामथविप्राणांप्रियाकादं
विनीशुभा सुवर्णनाम्नासीद्गतपान्नृत्यादिपरितोषणात् ३७ धात्रीछायाकृतश्राद्धोहंसोजातोयुधिष्ठिरः पौर्णमास्यांविशेषेणजागराच्चमदं
शकः ३८ अर्जुनःकविरासीद्यःपूर्वंचापिसुहृन्मम दृढएवासमहावीर्योभीमसेनोव्यजायत ३९ सहदेवःशुचिर्दांतोनकुलोऽभून्महाभुजःपु
राचीर्णव्रताद्येषात्वभूत्कादंविनीप्रिया ४० व्रतेनास्मिवशीह्येषांदाताहंपदमव्ययं भीष्मपंचकमेतन्मेकरिष्यतिव्रतंशुभं ४१ मथुरायांतथा

त्रतस्यमुक्तिःकरेस्थिता नारदउवाच श्रुत्वैवंव्रतमाहात्म्यंभीष्मःपरमविस्मितः ४२ प्रत्यक्षंचचकारेदंततःख्यातंतदाख्यया तद्व्रतस्यैवमा
हात्म्यात्पतितःसंगरेयदा ४३ प्रादुरासीत्तदाकृष्णोवनमालीचतुर्भुजः प्रसादसुमुखःप्रीतस्तमुवाचसहृत्तमः ४४ यावद्वर्तामिदे
हंत्वंतावत्तिष्ठामितेपुरः एवंयःकार्तिकेस्नायात्कुर्याद्दीपादिकंतथा ४५ ससालोक्यमायातिश्रुत्वेनांपरमांकथां शक्तःकुर्यान्मुनिश्रे
ष्ठचातुर्मास्यव्रतंशुभं ४६ अशक्तःकार्तिकंकुर्यात्संचभीष्ममथापिवा सकुर्यात्कार्तिकीमेकांयस्त्वशक्ततमोमतः ४७ दुर्लभाकार्तिकीलोकेस
र्वधर्ममयीतिथिः कार्तिकींनगृहेकुर्यात्तीर्थेकुर्यात्प्रयत्नतः ४८ गंगायांमथुरायांवासूकरेपुष्करेऽपिवा स्नातोनियममास्थायगच्छेद्विष्णुपुरं।
नरः ४९ सुवर्णवस्त्रधेन्वन्नदानान्यत्रमनीषिभिः दत्तान्यक्षयतांयांतिविष्णोस्तुष्टिकराणिच ५० वैवाहिकंतुलस्याश्चकर्तव्यंकार्तिकीतिथौ
व्रतंत्रिरात्रमुद्दिश्यशुचिस्नातमानसः ५१ हरिंकृत्वाथसौवर्णंतुलस्यासहितंशुभं पूजयेद्विधिवद्भक्त्याव्रतीतत्रदिनत्रयं ५२ वस्त्राभरण
शोभ्यादिवैवाहिकमुपायनं तुलस्यासहितायाथविप्रायवैविनिवेदयेत् ५३ एवंयथोक्तविधिनाकुर्याद्वैवाहिकंविधिं तुलस्याःकार्तिके
मासिसर्वपापैःप्रमुच्यते ५४ कार्तिकस्नानसमाकाचित्तिथिरन्यास्तिकार्तिके अत्रैवोदाहरंतीमभितिहासंपुरातनं ५५ यस्यश्रवणमात्रेण
सर्वपापैःप्रमुच्यते पुरादेशेशूरसेनेशिवशर्माद्विजोभवत् ५६ सत्यवादीस्वधर्मेराधनार्जनपरायणः ब्रह्मविद्यापरोनित्यंपितृभक्तोऽति
थिप्रियः ५७ तीर्थाटनरतःशांतोविष्णुभक्तोविमत्सरः तीर्थयात्राप्रसंगेनजगामासाववंतिकां ५८ तत्रदृष्ट्वामहादेवंमहाकालाभिधंततः
ददर्शवेदविदुषांविप्राणांतत्रमंडलं ५९ शुश्रावतेभ्योमाहात्म्यंकार्तिकस्यतदाद्विजः विशेषात्पुष्करक्षेत्रेशौकरेमाथुरेपुरे ६० तच्छ्रुत्वा
श्रद्धयाविष्टःशिवशर्माद्विजोत्तमः मथुरामगमद्भक्त्यापूजयामासकेशवं ६१ सस्नौसकार्तिकस्तत्रद्वादशीमवरत्पुण्ये ततःसपुष्करेतीर्थे

गत्वा सस्नाय कार्तिकान् ६२ ततः सम्भूकरे क्षेत्रे श्रद्धया कार्त्तिकत्रयं अथाजगाम विप्रोसौ स्वगृहं प्रीतमानसः ६३ पुत्रपौत्रैः परिवृतो वि
चित्रा अवदत्कथाः ततः प्रभृति कार्त्तिक्यां कार्त्तिक्यां याति शूकरे ६४ कदाचित्कार्तिकीं कृत्वा शूकरे याद्वे शुभे गच्छन्नाहं पथि श्रान्तो वने पश्यन्ज
लाशयं ६५ क्षुत्क्षामकंठो विप्रोऽसौ श्रमसंतापमूर्छितः जलाशयं समासाद्य अवगाह्यातिसुंदरं ६६ पीत्वा तदुदकं शीतं पद्मगंधाधिवा
सितं ततोऽवतीर्य सलिलाद्विमलात्प्रीतमानसः ६७ तीरे न्यग्रोधमद्राक्षीच्छीतच्छायं मनोहरं महाविटपिनं हृद्यं पक्षिसंघातनादितं ६८ व
नस्यनस्य सर्वस्य केतुभूतमिव स्थितं तं महातरुमासाद्य निषसाद द्विजोत्तमः ६९ अथ प्रेतं ददर्शासौ क्षुत्तृषाव्याकुलेंद्रियम् ऊर्ध्वकेशं मलि
नं रूक्षं निर्मांसं भीमदर्शनं ७० स्नायुबद्धास्थिचरणं धावमानमितस्ततः अन्यैश्च बहुभिः प्रेतैः समंतात्परिवारितं ७१ तं दृष्ट्वा विकृतं घोरं वि
स्मितो भूत् द्विजोत्तमः प्रेतोऽपि दृष्ट्वा तां घोरामटवीमागतं द्विजं ७२ तदा हृष्टमना भूत्वा विप्रांतिकमुपागतं अब्रवीत्स तदा विप्रं प्रेतराजो
द्विजं वचः प्रेत उवाच प्रेतभावो मया त्यक्तः प्राप्तोस्मि परमं सुखं त्वद्दर्शनान्महाप्राज्ञ मत्तो धन्यतरोऽस्ति न ७४ कोयंन्यत्काहमेचेतः
शांतिं यातं सुदारुणं मामुद्धर द्विजश्रेष्ठ मग्नं वै दुःखसागरे ७५ शिवशर्मोवाच कस्त्वं रूपकरालास्यस्त्वं प्रेत दृश्यसे कथय।
स्वसमभीत्याय यात्वं चासि तत्वतः ७६ प्रेत उवाच कथयामि द्विजश्रेष्ठ सर्वमेवादितस्तव प्रेतत्वकारणं श्रुत्वा दयां कर्तुमर्हसि ७७॥
॥ ॥ इति श्रीपद्मपुराणे कार्तिकमाहात्म्ये ब्रह्मनारदसंवादे द्वादशोऽध्यायः १२॥ प्रेत उवाच वैदिशं नाम नगरं सर्वसंपत्समन्वितं
नानाजनसमाकीर्णं नानारत्नविभूषितं १ नानापण्यसमायुक्तं नानावृक्षसमाकुलं तत्राभवद्वीरसेनो राजा धर्मपरायणः २ पितृदेव।
द्विजातीनां पूजासु निरतः सदा तस्य राज्ञः पुरोधा आसीन्मेधातिथिरिति श्रुतः ३ तस्य पुत्रोऽहमभवन्नाम्नात्तु शुकनासिकः वास्ये पित्रा पाठि

का

म्मा·
अ॰ २५

तोऽहंसर्वविद्याःशुभावहाः ४ अथयौवनमासाद्यराजसन्मानगर्वितः दुष्टसंगन्निमासाद्यकुकर्मनिरतोऽभवं ५ पितृव्यभ्रातृबंधूनां
हृतंवैवहुधाधनं मयादत्तंचवेश्याभ्योदासीभ्यःपापकर्मणा ६ द्यूतक्रीडापरोनित्यंदेवब्राह्मणदूषकः सर्वदापापनिरतःसर्वधर्मव
हिःकृतः ७ तन्नास्तिपातकंविप्रयदकार्यमहंतदा ततोनिराकृतोराज्ञाविचार्यसपुरोधसा ८ गूढोवसमहंतत्रनगरेदुर्जनैःस
हद्यूतक्रीडारतश्चाहंरात्रौचौर्यपरायणः ९ एकदाहंगृहीतश्चनागरैश्चौर्यमाचरन् नीतोवध्यानतस्तैश्चराजद्वारंततोनृपः १० नि
स्सारयामासतदावधार्हमपिमांपुरात् ततोऽतिगहनेरण्येवसानोवनवासिभिः ११ दुष्टैःसहमयातत्रवहवःपथिकाहताःधनलो
भाभिभूतेनमहासाहसिकेनच १२ ततोवहुतिथेकालेमृतोऽहंनिर्जनेवने अग्नियोगश्चनप्राप्तश्चांडालस्पर्शदूषितः १३ यमदूतैर्म
हाघोरैःसन्नीतोयमसादनं मानुषाद्यमलोकस्यमध्येमार्गोभयावहः १४ योजनानांसहस्रंचहाहाकारःप्रवर्तते प्रथमंतत्रविप्रेंद्र
नीतोऽहंयमकिंकरैः १५ ततःपंचसहस्राणियोजनानांप्रमाणतः कंटकैःसंकुलंस्थानमस्तितीक्ष्णाग्रभीषणैः १६ योजनानांस
हस्राणितिमिरेणप्रपूरितम् स्थानमन्यंतघोरंहिदशद्वादशपंचच १७ तदग्रेऽष्टसहस्राणिपंचविंशतिरस्तिहि महोदधिर्महारौ
द्रोदुष्टजंतुनिषेवितः १८ मलादिपूरितोविप्रनिर्जलोदुरतिक्रमः तदग्रेऽष्टसहस्राणियोजनानांप्रमाणतः १९ सर्वतोजलसंकीर्णस्था
नमस्तिद्विजोत्तम षडशीतिःसहस्राणियोजनानांप्रमाणतः २० एवंमहापथःप्रोक्तःसर्वदुःखसमाश्रयः क्रमेणतत्रतत्राहंदूतैर्नीतो
भयानकैः २१ यमदूताश्चमांप्राहुर्यातनांपापकर्मिणां दुष्टेनचक्षुषादृष्टापरदारानराधमैः २२ वज्रतुंडाःखगास्तेषांहरंत्येतेविलोचने
यैःशास्त्रमन्यथाप्रोक्तंयैरसद्वागुदाहृता २३ वेदवेदद्विजातीनांगुरुनिंदाचयैःकृता हरंतितेषांजिह्वांचजायमानांपुनःपुनः २४ मित्र

जा·
१२

राम·
२५

भेदस्तथापित्रापुत्रस्यस्वजनस्यच याज्योपाध्याययोर्मात्रासुतस्यसहवांधवैः २५ भार्यापत्योश्चयेकेचिद्भेदंचक्रुर्नराधमाः तइमेपश्य
तुद्यंतेकरपत्रेणपापिनः २६ परोपतापकायेचयेप्राणान्तिकतापकाः करंभवालुकासंस्थास्तइमेपापभोगिनः २७ भुंक्तेश्राद्धे
तुयोन्यस्यनरोन्येननिमंत्रितः दैवेचाप्यथवापित्र्येसद्विधाक्रियतेखगैः २८ मर्माणियस्तुसाधूनांवदन्वाग्भिर्निकृंतति तानेतेतुदस्
नास्तुस्वगास्तिष्ठंत्यवारिताः २९ यःकरोतिचपैशून्यमन्यवागन्यथागतिः पाटयंतेचद्विधादेहस्तस्यैन्त्यंनिशितैःशरैः ३० मातापित्रोर्गु
रूणांचयेवज्ञांचक्रुरुद्धताः तइमेपूयविण्मूत्रगर्तेमज्जंत्यधोमुखाः ३१ देवतातिथिभूतेष्वभुक्तंयैःक्षुधितेष्वच दुष्टान्नंपूयनिर्वितस्
चीवक्त्रास्तुसोऽश्नुते ३२ एकसार्थप्रयातायेनिःस्वमन्नार्थिनंनरं तमपास्यान्नमश्नंतितइमेश्लेष्मभोजिनः ३३ गौरग्निर्जननीविप्रो
गुरुःस्पृष्टःपदान्नृभिः बद्धांघ्रयस्तेनिगडैर्लोहैरग्निप्रतापितैः ३४ स्वपोषणपरोयस्तुपरित्यजतिमानवः पुत्रभृत्यकलत्रादिवंधुवर्ग
मकिंचनं ३५ दुर्भिक्षसंभ्रमेवापिसोऽप्येवंयमकिंकरैः उत्कृत्यचान्त्राणिमुखेस्वमांसान्यश्नुतेक्षुधा ३६ मर्त्यास्तेपितुविप्रप्रसुरापिगु
रुतल्पगाःअधश्चाधश्चदीप्ताग्नौदह्यमानाःसमंततः ३७ एवंसंदर्शयंस्तैस्तुनीतोहंयमकिंकरैः ततःशृंखलयाबद्ध्वातैर्नीतोहंयमक्षयं
३८ महापापीसमानीतइत्यहंतैर्निवेदितः अथवैवस्वतोदृष्ट्वामांतथाविधमादिशत् ३९ प्रेतएवचिरंतिष्ठत्वयंभूमौस्वपापतःप
श्चात्तेयोमहापापोनरकानेकविंशतिः ४० माविलंबंकुरुध्वंभोपापिनस्तस्यताडने श्रुत्वेदंनिर्गतादूतास्त्वरयाक्रोधसंयुताः ४१ब्रह्मदंड
कराघोरानानाशस्त्रास्त्रधारिणः ताडयंतश्चमांसर्वेजगदुर्निष्ठुरंवचः ४२ महापापदुराचारप्रेतोभूत्वाचिरंवस भूतलेतत्रदुःखानिब
हून्यनुभविष्यसि ४३ ततस्तेचक्रमेणैवनरकान्प्राप्स्यसेऽखिलान् कल्पमेकंमहादुःखंप्राप्स्यसेयमशासनात् ४४ इत्युक्त्वाप्ययुः १४

का
मा·मा
२६

सर्वेस्वहमेतादृशोभवं सर्वासांदुष्टजातीनांभाजनंद्विजसत्तम ४५ एतेकुकर्मसंचितास्तुल्यकर्मवशाममप्रेतभावंसमासाद्यदुःखान्यनु
भवंतिच ४६ दुःखार्णवस्यवैतस्यनांतंपश्यामिसुव्रत त्वद्दर्शनपथंप्राप्यममाशाजायतेद्विज ४७ गतेपिप्रेतभावेस्मिन्माविदुःखंमहा
न्मम· नरकेषुकृपासिंधोतथापिप्रार्थयाम्यहं ४८ अतिकातरवाक्यात्तुश्चाप्रेतयोनिंदयन्द्विजः गतेऽपिप्रेतभावेस्मिन्नान्नमस्तिद्विजोत्तम।
४९ त्वांविनान्नप्रपश्यामिदुःखस्यास्यविनाशकं इतिप्रेतवचःश्रुत्वासविप्रःकृपयान्वितः ५० उवाचप्रेतराजंतंधर्मज्ञःपरिसान्त्वयन् शि
वशर्मोवाच यथाविमोक्षसेप्रेतप्रेतभावात्सुदुःसहात् ५१ अग्रेचनारकंदुःखंयथानप्राप्स्यसेमहत् तथाहंप्रयतिष्येद्यत्यजशोकंसुदा
रुणं ५२ भाविनोनरकायस्यनाशयंतिहदस्यच दास्यामिकार्तिकंत्वेकंयथामोक्षमवाप्स्यसि ५३ पापान्मूर्त्तभवोमन्नात्वंनिसर्गान्निराह।
णात् प्रेतभावाद्विमोक्षायगृहाणैकंचकार्तिकं ५४ अन्यथानिष्कृतिःप्रेतनपश्यामितवाधुना इतिश्रुत्वातनंवाक्यंप्रेतोऽसौशिवशर्मणः ५५ वि
नयावनतोभूत्वाजगादद्विजसत्तमं प्रेतउवाच सर्वदाक्रूरचित्तस्यक्रूरकर्मरतस्यच ५६ संगमासाद्यसाधोस्तेममापिमतिरीदृशी पुण्या
भिलाषिणीजानासाधुदर्शनशोधिता ५७ तस्मात्वामद्ययाचेसर्वदाधर्मतत्परं एतेममापिसुहृदोमुच्येरन्नेकशोयथा ५८ तथात्वंदेवक
र्तव्यंनेषामन्योगतिप्रदः इतिश्रुत्वावचस्तस्यशिवशर्माद्विजोत्तमः ५९ उवाचवचनंतेषांप्रेतानामुपकारकं शिवशर्मोवाच सूकरैर्वैसवै।
स्तैर्यत्कृताकार्तिकीमया ६० सर्वेभ्यएवप्रेतेभ्यस्तांप्रदास्यामिनिश्चितं इत्युक्त्वासोद्विजवरःसर्वप्राणिहितेरतः ६१ स्नात्वाविष्णुंचवि।
ध्येशंजलमादायनिर्मलं यथाप्रतिश्रुतंप्रादाद्धर्ममेभ्यःपृथक्पृथक् ६२ शिवशर्मोपरितदापुष्पवर्षपपातह विद्याधरगणैर्युक्तमप्स
रोभिश्चकिन्नरैः ६३ देवदुंदुभयोनेदुस्तरक्षणमिवाभवन् प्रेतानिजतनूस्त्यक्त्वादिव्यकांतिधराद्वराः ६४ स्तूयमानाःसुरगणैरवापुःप।

जा·
१२

राम·
२६

रमांसुरं विमानानि विचित्राणि दिव्यतेजोमयानि च ६५ कामगानि महार्हाणि समारुह्य पृथक्पृथक् जग्मुर्दिवं सुवायुक्ताः स्तुवंति द्विज
सत्तमं ६६ शिवशर्मापि तद्दीपस्य माहात्म्यं परमाद्भुतं विस्मयाविष्टहृदयः क्षणं तत्रैव तस्थिवान् धर्मदानप्रभावेन दिव्यतेजोवपुर्द्धरः शुशु
भे स द्विजश्रेष्ठः प्रभाभिरिव भास्करः ६७ ततो दृष्ट्वा द्विजवरः कार्तिक्यामहदद्भुतं माहात्म्यं मुदितात्मा सो जगाम निजमंदिरं ६८ इति
ते कार्तिकी पुण्या मयोक्ता द्विजसत्तम अस्यां ये धर्मनिरतास्ते यांति परमां गतिं ७० ॥ ॥ इति श्रीपद्मपुराणे कार्तिकमाहात्म्ये त्रयोद
शोऽध्यायः १३॥ नारद उवाच दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः तत्रापि दुर्लभः कालः कार्तिको हरिवल्लभः १ दीपेनापि हि यत्रासौ प्रीय
ते हरिरीश्वरः तस्यापि स्वर्गतिं दत्ते योऽन्यदीपं प्रबोधयेत् २ किंपुनः श्रद्धया भक्त्या दीपं स्वयमिहार्पयेत् अत्रेतिहासं भो ब्रह्मन्परदीपप्र
बोधने ३ शृणु चित्रं प्रवक्ष्यामि तवाग्रेहं यथा मुने रैवतस्य मनोर्वंशे राजासीद्भद्रधीः सुधीः ४ तस्य पुत्रोऽतितेजस्वी सुदर्शन इति स्मृ।
तः विद्यावलातिनिपुणो रूपेणाप्रतिमो भुवि ५ भद्रबुद्धे राजधानी महेंद्रा नर्मदातटे तस्यां सपुत्रो निवसन्विषयान्बुभुजे बहून् ६ एकदा।
तत्सुतो वीरो विजितारिः सुदर्शनः मृगयारसिको धन्वी युवान्यैर्युवभिर्वृतः ७ स तदा राजमार्गेषु पुष्पैर्लाजाक्षतैस्तथा अभिवृष्टश्च आ
शीर्भिर्वृद्धैर्विप्रैः प्रयोजितैः ८ वृतो वागुरिकैरन्यैर्हरिदस्त्रयुतैस्तथा विगाह्य विपिनं भूरि गृह्णन्मृगपशूंस्तथा ९ गच्छन्नेवांतरं प्राप।
तत्रैकां चावसन्निशां प्रातरुत्थाय तत्तीरे रेमे पश्यन्वनस्थलीः १० तदैव सरितः पारे प्रमदारत्नमुत्तमं कुमारो ददृशे विप्र विस्मयावि।
ष्टचेतनः ११ गौडराजस्य कोप्यासीत्तत्सुता सा वरांगना सखीभिः सह क्रीडंती नर्मदातीरमागता १२ साद्योतयंती प्रभया वनस्थलीमाश्र।
यवतीं हि कुचपद्मकुड्मले करांबुजाताडितकंदुकेक्षणा परिप्लुतं लोचनखंजनद्वयं १३ सनूपुरं तत्पदवीपदद्वयं सशब्दमन्वक्कलती मरा।

स्रवत् विलोक्य पञ्चास्युगवेगमोहितः साचापितंसुंदरवीरमैक्षत १४ अन्योन्यदर्शनोद्भूतरागनिर्विद्धमानसौ लज्जालोलैर्लोचनैस्तौ न
दीमध्येनविप्लितौ १५ ततःसुदर्शनःश्रीमांस्तत्रैवस्थाप्यसैनिकान् एकएवसदश्वेनपरंपारंजगामह १६ कस्यांतरेलीयमानांतांलज्जया।
वीतलोचनां पप्रच्छतांततदोवाचस्वकुलंजनकंतथा १७ साचतंचकमेवीरंकुलविद्यावयोगुणैः आत्मानुरूपंरूपेणनारीणांहृदयंगमं १८
गांधर्वेणविवाहेनसंगतौतावुभावपि इतिरतिमनुभूयनार्मदेसौसुखतरघनवेतसीनिकुंजे १९ सपदिगृहमवाप्यराजपुत्रःपरममुदंमद
नालसाचलेभे अथासौभद्रधीराजापुत्रंराज्यधुरंधरं २० अभिषिच्यजगामाशुतपसेविषयानिगः मदनालसाचसादेवीपतिंकृत्स्नंविचिंत्यतं
२१ सुदर्शनंचिंतयंतीहरेराराधनंपरं चकारवैष्णवंधामसुवर्णमणिसंयुतं २२ तत्रतौदंपतीविष्णुंपूजयामासतुर्मुदा एकदादीपदानं
साददानाविष्णुमंदिरे २३ कार्तिकेपतिनाहूताशीघ्रंनागाततोनृपः क्रुद्धःसमागतांप्राहसेर्ष्यतांमदनालसां २४ सुदर्शनउवाच माम
नादृत्यकोयंतेदीपदानेमहाग्रहः पतिर्देवोहिनारीणामित्येवंप्रब्रवीषिमे २५ हसित्वोवाचतंदेवीमंजुवाक्येनसांत्वतो मदनालसोवा
च शृणुराजन्प्रवक्ष्यामिविचित्रंचरितंमम २६ अस्तिगोदावरीतीरेहरेरायतनंशुभं अत्यद्भुतंमहापुण्यंनानामुनिनिषेवितं २७ तत्रा
हंमूषिकावात्संनिर्माल्योदकभागिनी वेदव्रतोमुनिःकश्चित्तत्रागत्याथकार्तिके २८ दीपंप्रज्वालयामासयावन्मासमखंडितं मूष्याल।
येक्षीणज्योतिर्वर्तिकांतैललोभतः २९ मयाधृतंततोज्योतिःप्रभूतंमेदहन्मुखं दग्धान्नताप्यशक्तास्मिभक्षणेक्षीणजीविता ३० मृतादे
वालयेतस्मिन्साक्षात्पश्यामिस्वप्नवत् मयाप्रबोधितोदीपोरात्रौजज्वालपूर्ववत् ३१ तस्यैवपुण्यस्यमयायद्दृष्टः प्रभावएषास्मियतस्त्व
दीया महिष्यनन्येदृशसौभगांमयाजानिस्मरत्वंचममास्ततस्मात् ३२ राजन्नस्यानुभूतोमेमहिमापरमाद्भुतः अतोमेदीपदानस्य।३

कार्त्तिकेपरमाग्रहः ३३ यदिश्रद्धापरोनित्यमखंडंकार्त्तिकेनरः दीपंदद्याद्धरेरग्रेतत्फलंकेनशक्यते ३४ तच्छ्रुत्वाविस्मयाविष्टोहृष्ट-
रोमासुदर्शनः कार्त्तिकेनियमांश्चक्रेचक्रायुधसमर्चने ३५ इतिहरिपरिचर्यांकार्त्तिकेतौविधायसमुचितहरिभक्तीदंपतीसंप्रतीतौ इ-
हहिसकलभोगान्प्राप्यसंत्यज्यदेहं कमलनयनलोकंजग्मतुर्दैवयानैः ३६ नारदउवाच अन्यैरपियथादत्तंतच्छृणुष्वाथशौनक दीपस्य
मोनाशकस्तुष्ट्यर्थंचक्रपाणिनः ३७ पाञ्चालदेशेविप्रर्षेराजाभून्सिंहविक्रमः नाम्नाचिंतामणिर्वीरोहरिवज्जनवल्लभः ३८ ॥
विष्णुभक्तिपरोधीमान्प्रजापालनतत्परः महामखकरःश्रीमान्दानदःसर्वदाजयी ३९ तस्यराष्ट्रेमहापापोनाम्नाहरिकरोह्यभूत्
दुराचारोद्यूतकारोदुष्टाशीसुदुरासदः ४० अधर्मविषयासक्तःशश्वद्वेश्यारतोद्विज पितृवित्तक्षयकरोवंशच्छेदकुठारकः ४१ अस-
त्संगप्रभावेणत्रयीविधिनिषेधकः युक्तोविटशतैःसोऽथमद्यपानरतोभवत् ४२ कदाचित्तेनदेवर्षेद्यूतेपितृधनंमहत् हारितंद्विजश्रे-
ष्ठेनततोदुःखीसदाभवत् ४३ सकदाचित्साधुसंगात्तीर्थयात्राप्रसंगतः अयोध्यामागतोब्रह्मन्महापातककञ्चुकः ४४ कार्त्तिकेमा-
सिभगवच्छ्रीमद्विष्णोर्हरेर्गृहे द्यूतव्याजेनतेनाशुदीपोदत्तोनिशामुखे ४५ तद्दीपदानमाहात्म्यादर्जितंप्रचुरंधनं लुब्धकेनततस्तेनदी-
पोदत्तःस्वभाग्यतः ४६ प्रत्यहंकार्त्तिकेमासिहरेरायतनेशुभे ततःससाधुसंसर्गात्कदाचिद्द्विजसत्तमः ४७ स्नानार्थंगोमतीतीरंस्वयंकार्त्तिके
समुपागतः स्नातः सत्संगतः कामात्तत्तीर्थेद्विजसत्तम ४८ पापराशिंविनाश्याशुनिःपापः समभूद्द्विजः देहांतेऽथपुनःस्वर्गंजगामहरिसं-
निधौ ४९ दिव्यंविमानमारुह्यदिव्यस्त्रीशतसंवृतः दृश्यतेऽद्यापिलोकेसद्द्विजोनक्षत्रमंडले ५० नाम्नाभिजिन्मुनिवरनक्षत्रकुलभूषणं वक्तुं
दीपस्यमाहात्म्यंनशक्यंहरिणास्वयं ५१ अभिजिन्नामनक्षत्रंमाहात्म्यंतस्यगीयते कार्त्तिकेयैःप्रबोधिन्यांकृतंकर्पूरदीपकं ५२ कुलेनेषांप्रसू-

नाथेनैभवंतिहरेःप्रियाः कार्त्तिकेशुक्लपक्षेतुएकादश्यांद्विजोत्तम ५३ वेश्ययाचैंदुमत्येहदीयोदत्तोहरेर्गृहे दीपंदत्वाप्रमत्तासासुस्वा
पविहसंगता ५४ तत्तस्मिन्नंतरेवत्सतैलपानार्थमातुरा आगतामुषिकातत्रनिजदैवप्रणोदिता ५५ तैलपानेप्रहष्टासाप्रजज्वालाथदी
पकः तेनपुण्येनमहतापरांगतिमवापसा ५६ लुब्धकोपिचतुर्दश्यांदीपंदत्वाशिवालये द्युतार्थंभक्तिहीनोपिशिवलोकंजगामसः ५७ गोपः
कश्चिदमावास्यांदीपंदत्वाथशार्ङ्गिणः मुहुर्जयजयेत्युक्त्वापरांगतिमवापसः ५८ तस्माद्दीपाःप्रदातव्याःदिवारात्रौचकार्तिके तुलसीपथ
गोष्ठेषुतीर्थेष्वायतनेषुच ५९ विदर्भदेशेराजाभूद्वीरसेनोमहायशाः तेनात्रकार्तिकेमासिदत्तश्चाकाशदीपकः ६० दामोदरायनभसितु॰
लायांलोलयासह दीपंतेहंप्रदास्यामिनमोनंतायवेधसे ६१ अनेनदीपंदत्वाचक्रतोत्सर्गविधिर्नृपः शरदांशतंसयावद्दिहभुक्त्वाभोगान्मनो
रमान् ६२ सपुत्रपौत्रस्वजनोवुभुजेसहभार्यया ततश्चांतेद्विजवरविमानंसुमनोहरं ६३ समारुह्यवरस्त्रीभिर्गीयमानःसभूपतिः विष्णुलो॰
कंविष्णुरूपोययौतद्दीपदानतः ६४ दास्यंतियेकार्तिकमासिमर्त्याव्योम्निप्रदीपंहरितुष्टयेत्र पश्यंतितेनैवकदाचिदेवयमंसदारौद्रमुखंद्वि
जोत्तमाः ६५॥ ॥ इतिश्रीपद्मपुराणेकार्त्तिकमाहात्म्येचतुर्दशोऽध्यायः १४॥ नारदउवाच अतःपरंप्रवक्ष्यामिकार्तिकस्यविशेषतः
महिमानंशृणुध्वंभोमुनयोगदतोमम १ यत्रकुत्रापिदेशेहिकार्तिकेस्नानदानतः अग्निहोत्रसमंपुण्यंपूजायांचविशेषतः २ कुरु॰
क्षेत्रेकोटिगुणंगंगायामपितत्समं ततोऽधिकंपुष्करेस्याद्द्वारवत्यांचभार्गव ३ पुण्याःपुर्यश्चसप्तैवमुनयोमथुरादिकाः दामोदरोदेवदे
वस्तत्रावात्सीद्यतःकिल ४ मथुरायांततःसोर्जेवैकुंठप्रियवर्द्धिनी कार्त्तिकेमथुरायांवैपरमावधिरिष्यते ५ यथामाघेप्रयागःस्याद्वैशाखेजा
ह्नवीयथा कार्त्तिकेमथुरासेव्यातथोत्कर्षपरेणाहि ६ परप्रसंगमुद्दिश्यकार्त्तिकेहरिपूजनं माथुरैलभतेभक्तिंकिंपुनःश्रद्धयायुतः॥ ॥

७ अत्राप्युदाहृतःपूर्वैरितिहासोमहाद्भुतः धूम्रकेशोमहापापोयथालेभेपरांगतिं ८ कलिंदपर्वतेरम्येनाम्नादीर्घपुरंपुरं तत्रराज्ञा
तिधर्मात्मासुबाहुःसोमवंशजः ९ ब्रह्मण्योविष्णुभक्तश्चप्रजापालनतत्परः तस्यात्मजोधूम्रकेशोज्येष्ठःसुंदररूपवान् १० क्रीडन्सबाल
कैर्दुष्टैर्दुःसंगाद्दासदुर्मतिः द्यूतक्रीडारतोनित्यंतदर्थंतस्करायते ११ गूढःपिबतिमद्यंचयौवनेरूपवानभूत् मार्गयन्नागरीचौरीर्विटयू
थसमन्वितः १२ दूतिकाभिश्छलेनापिधनेनचबलेनच अगम्याब्राह्मणीश्चापिनात्यजत्काममोहितः १३ पितातस्यत्वाततकर्मताडनंशा
सनंतथा अकार्षीन्नचतस्याभूत्स्वभावंकर्तुमन्यथा १४ कदाचित्कंदुकक्रीडांकुर्वतस्तस्यकंदुकः प्रत्यागतोराजगृहंप्रागात्तंचनिनीष
या १५ स्वयंपश्चाद्गतोयत्रनवोढाराजभोगिनी तद्विमानानुसानस्वरूपयौवनमोहिता १६ दूरतःकंदुकंतस्मैदर्शयंतीपुनःपुनःस
क्रीडहासभावेनप्रोवाचमधुराक्षरं १७ अत्रागच्छगृहाणेमंकंदुकंदीपितंमया यद्यदिच्छसिदास्यामितत्सर्वंनृपनंदन १८ इत्येवमा
कर्ण्यचकर्णरोचनंवाक्यंचतस्यामधुरंमहाविटः अंधीकृतात्माबुबुधेनपातकंगृहंप्रविष्टोद्भुतमालिलिंगतां १९ तंज्ञात्वाचनृपतिस्त
स्यकर्मचात्यंतदारुणं देशान्निःसारयामासस्नेहाद्वध्यंचनावधीत् २० निःसारितोगृहाद्राज्ञाधूम्रकेशोनृपात्मजः वनंविवेशक्रीडार्तो
निर्जनंफलमूलभुक् २१ दस्युकर्मकरोनित्यंपथिकान्हन्तिलुंपति ततोऽगाद्राजभीत्यासोदूरेचगहनंवनं २२ शूरवानःसमुपायातो
दैवाद्वृंदावनंवने तत्रावात्सीद्दिवाभीत्यारात्रौमधुपुरींययौ २३ वासार्थंददृशेचित्रंवेश्यासद्मसुशोभनं वेश्यांचरूपसंपन्नांदृष्ट्वातस्यां
व्यसज्जत २४ चौर्येणधनमानीयतस्यैदत्वागृहेवसत् दिवावृंदावनेयातिराजकुल्यैरलक्षितः २५ सिंधुदेशोद्भवोविप्रोनाम्नासत्यव्रतः
सुधीः विरक्तइन्द्रियार्थेषुत्यक्त्वापुत्रगृहादिकं २६ वृंदावनेस्थितःकृष्णमाराधयद्दिवानिशं निःस्वःसत्यव्रतोविप्रोनिर्जनेऽव्यग्रम

का
की·मा·
२९

मानसः कार्तिकेपूजयामासप्रीत्यादामोदरंद्विजः तृतीयेन्हिसहस्रंतुतोमूलंवाफलमेवच २८ पूजयित्वाहरिंस्तौतिप्रीत्यादामोदराभिधं
सत्यव्रतउवाच नमामीश्वरंसच्चिदानंदरूपंलसत्कुंडलंगोकुलेभ्राजमानं यशोदाभ्ययोलूखलेवध्यमानंपरामृष्टमत्यन्तमुद्रुत्यगोप्या
२९ रुदंतंमुहुर्नेत्रयुग्मंमृजंतंकरांभोजयुग्मेनसातंकनेत्रं मुहुःश्वासकंपत्रिरेखांककंठस्थितग्रैवदामोदरंभक्तिबद्धं ३० वरंदेवमो।
क्षंनमोक्षावधिंवानचान्यंवृणेऽहंवरेशादपीह इदंतेपुनर्नाथगोपालबालसदामन्मनस्याविरास्तांकिमन्यैः ३१ नमोदेवदामोदरानंतवि
ष्णोप्रसीदप्रभोदुःखजालाब्धिमग्नं कृपादृष्टिवृष्ट्यातिदीनंतवानुग्रहाणेशमामज्ञमध्याक्षिदृश्यं ३२ नारदउवाच सत्यव्रतद्विजस्तोत्रं।
श्रुत्वादामोदरोहरिः विद्युल्लीलाचमत्कारोहृदयेशनकैरभूत् ३३ अंतर्हितेऽथतद्रूपेविह्वलोविललापह इतस्ततोधावमानःपुनःपूजा
करोतिच ३४ तद्दैवततत्तः सोपिधूम्रकेशोनृपात्मजः लीनोददर्शतत्पूजांवैष्णवंचसकौतुकात् ३५ राज्ञावागत्यवेश्यायैहास्यप्रीतिरसप्रदं
उवाचतस्यवृत्तांतंसविस्तरमुदीक्षितं ३६ तथैवपूजामकरोत्स्मत्वाचप्रतिमांमुदा तथैवनामगृह्णन्ससहासोदुष्टचेतनः ३७ एवंबहुवि
धंहास्यंकृत्वाविप्रस्यवेश्यया रेमेरात्रौततःप्रातर्हतोराज्ञोधिकारिभिः ३८ तस्यापराधंसंचिंत्यहतस्तैःसयमालयं नीतोदूतैस्तदीयैसंदा।
दर्शपितृराट्स्वयं ३९ ज्ञात्वातस्यचतत्कर्मकार्तिकेहरिपूजनं मथुरायांपरीहासव्याजेनाखिलधर्मवित् ४० उत्थायचासनात्तूर्णमातिथ्यं
तस्यचाकरोत् अर्घादिनातंसंपूज्यस्वदूतांस्तानगर्हयत् ४१ यमदूतउवाच रेदूताभ्रष्टविज्ञानाधिगस्मच्छासनातिगाः यतोनिवारिताःकार्यो।
न्मुहुस्तद्वैप्रकुर्वते ४२ कतिधाशिक्षितंयद्वस्त्याज्योविष्णुपरायणः नाहंप्रभुस्तस्यदंडेयूयंदंडचिकीर्षवः ४३ नमोस्तुतस्मैसौम्यायभक्तवात्सल्य
शोभिने यःपुनःपुनरेवास्मदज्ञानंक्षमतेहरिः ४४ इत्येवमुक्त्वापुनरेवविस्मितःपप्रच्छसौम्याकृतिधूम्रकेशं व्रीडाभिभूतोधर्मराजोमहा

आ·
१५

एम·
२९

त्मासर्वेषुभूतेषुसमःप्रशान्ता ५५ अहोकष्टंधूम्रकेशत्वदुःखंमहत्कृतं मथुरामागतस्यापिकृतदंडस्यपार्थिवैः ५६ सुहृत्सापितवा
चार्येकृष्णपूजांप्रकुर्वतः वैकुंठपुरवासाययोग्यस्तवशासनं ५७ मथुरानयनंचापिनयुज्येतकथंचन धूम्रकेशउवाच सर्वंमेजन्म
पापेनयुक्तस्यैवंगतिर्विभो ५८ कथंवाशुद्धतामेद्यकथंवैकुंठयोग्यता महदाश्चर्यमुक्तंमेमहात्मनोऽनुग्रहःकृतः ५९ यस्यपुण्यस्यमाहा
त्म्यात्पापोहंयामिसद्गतिं तन्मेविस्तरतोब्रूहिकृपांकुरुममप्रभो ६०॥ ॥इतिश्रीपद्मपुराणेकार्तिकमाहात्म्येपंचदशोऽध्यायः १५॥ यम
उवाच नमस्कृत्यारविंदाक्षंनारायणमनामयं धर्मंतेकथयिष्यामिधूम्रकेशशृणुष्वतत् १ सएवपरमोधर्मःश्रमएवातिनिश्चितं श्रव
णंकीर्तनंपूजासर्वकर्मार्पणंस्मृतिः २ परिचर्यानमस्कारःप्रेमस्वात्मसमर्पणं इत्येवंनवधाभक्तिःकृष्णेयैःप्रीतयेकृता ३ करणीयंकिमस्ता
स्तिपरंनिःसंशयंविदं तत्रापिकार्तिकंप्राप्यतत्रापिमथुरांपुरीं ४ कृष्णस्यातिप्रियंयुग्मंदेशकालविशेषतः तस्माच्चपात्मजश्रेयःपरंकिंचित्न
विद्यते ५ अनुभूतंत्वयैवात्रमहापापयुतात्मना परिहासापदेशेनकृष्णपूजाफलंत्विदं ६ यद्घोरनरकार्हस्यवैकुंठनयनंमहत् एकएवहिध
र्मोहिसर्वत्रसुखदःस्मृतः ७ तत्रापिद्विविधोधर्मःप्रवृत्तोऽथनिवृत्तकः अर्थानुरागिणःपुंसःप्रवृत्तोधर्मउच्यते ८ अर्थेऽनर्थदृशःपुंसःभक्तस्य
चहरौतथा निवृत्तःप्रोच्यतेसद्भिरधिकारिव्यवस्थया ९ दयासर्वेषुभूतेषुपरमाधर्मभूमिका तस्मात्तस्यानुयोधर्मःसधर्मःपरमःस्मृतः
१० ननरोनरकंयातिसर्वभूतदयापरः वापीकूपतडागादिप्रणेताद्रुमकारकः ११ पांथविश्रामहेत्वर्थंपूर्तमित्यभिधीयते अग्निहोत्रादिका
यागाःप्रोक्तायेसाधिताधनैः १२ क्रियंतेयदितेचेष्टमत्रयस्वर्गदावुभौ निष्कामश्चित्तशुद्ध्यर्थंज्ञानसाधनमिष्यते १३ दुर्भिक्षेऽन्नप्रदानंच
बालवृद्धातुरस्यच अनाथस्यासमर्थस्यपालनंपूर्तवत्स्मृतं १४ अध्वनीनोऽतिथिर्ज्ञेयःश्रांतःकोपिनरोभवेत् अपिचाङ्डमिपानीयंतोय

णां तन्महत्फलं १५ यस्मात्कृतास्स भग्नाशो याति तत्सुकृतं नयेत् एकादशीव्रतं सौम्यं यद्येकं सम्यगर्जितं १६ किं दानैः किं तपस्तीर्थैः सर्वदं भं विना कृतं दशम्यां संयमं कृत्वा परद्रोहनियतेन्द्रियः १७ क्रोधहिंसाविहीनश्च कृष्णकीर्त्यादिनं नयेत् रात्रौ जागरणं पूजा चतुर्थ्यामेषु भक्तितः १८ प्रातर्विधाय मिष्टान्नं भुंजीतैवं विधिः स्मृतः न लंघयेदिमं सर्वं सर्वधर्मशिरोमणिं १९ स्वर्गस्थाः किल गायंति देवा गाथां नरास्मृति धन्यान राभारतखंडवर्तिनो येषां शरीरं हरिभक्तिसाधनं २० क्षणं नराः कृष्णकथानुरागास्तस्याद्पद्मे हृदि दध्युरुत्सुकाः तराभयं यांति परं पदं हरेः कृत्वा च नो मूर्ध्नि पदं विचित्रं २१ यद्यस्ति किंचित्कृतयज्ञसंभवं तथोभयं वा सुकृतं च शेषं तेनास्तु नो मानुषजन्मभूः सोस्मृत्वा भजामो हरिपादपद्मं २२ नैवातिभोगातिशयस्तथात्र न वापि मन्येत हरिस्तथार्चनं यथाल्पमप्यूरु च मानुषे बहुदेहे कृतं दीनदयालुरीप्सते २३ नस्माद्दे मानुषं जन्म भारते प्राप्य मानवः देहं प्राप्य हरिं नैव भजेत्तासौ स्वघातकृत् २४ राजा हि कस्य विद्वत्वा सर्वस्वं चेत्प्रयच्छति परस्मै तस्य कास्तत्र नियंतास्यान्न भोगो यथा २५ अयं सर्वेश्वरः श्रीमानन्यथा कर्तुमीश्वरः अल्पमल्पं बहु मन्येत बहु तुच्छं च मन्यते २६ प्रेम्णा कृतं तुच्छमपि मेरुवद्विन्दते फलं आत्मारामोद्य भक्त्या चेत्कृतं मेरुस्वरूपं भवेत् २७ अतः प्रेम्णा च यत्नस्मात्तं भवेत्पूजनं हरेः इति धर्मो मया दिष्टः सर्वथा धर्ममाचरेत् २८ पुण्यापुण्ये हि पुरुषः पर्यायेण समश्नुते भुंजतश्च क्षयं याति पुण्यं पापमथापि च २९ न तु भोगादृते पुण्यं पापं वा कर्म मानवः परित्यजति भोगांश्च पुण्यापुण्ये निबोध मे ३० दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयं मृतेभ्यः प्रमृता यांति दरिद्राः पापकारिणः ३१ उत्सवादुत्सवं यांति स्वर्गात्स्वर्गं सुखात्सुखं श्रद्दधानाश्च दांताश्च धनाढ्याः शुभकारिणः ३२ व्याघ्रकुंजरदुर्गाणि सर्पचौरभयानि च हस्तावापेन गच्छंति पापिनः किमतः परं ३३ सुगंधिमाल्यवस्त्रैश्च साधुवादाशनैस्तथा स्तूयमानाः सदा यांति पुण्याः सर्वत्र सुखैर्नराः ३४ अनेकशतसाहस्रजन्मसंचय

संचितं पुण्यापुण्यंनृणांनूनंसुखदुःखाकरोद्भवं ३५ यथाहिबीजंसर्वत्रपयांसिसमवेक्षते पुण्यापुण्यंतथाकालेदेहांतेकर्मकारणं ३६
स्वल्पपापंकृतंपुंसांदशाकालोपपादितं पादन्यासाहतंदुःखंकंटकोत्थंप्रयच्छति ३७ तत्प्रभूततरंस्थूलंशंकुकीलकसंभवंदुःखंयच्छ
तितद्वच्चशिरोरोगादिदुःखदं ३८ अपथ्याशनशीतोष्णश्रमतापादिकारणं तथान्यानप्यवेक्षितपापानिफलसंगमे ३९ एवंमहांतिपापा
निदीर्घरोगादिकंक्रमं तद्वच्छस्त्राग्निदुःखानिबंधनादिफलायवै ४० अल्पंपुण्यंशुभंगंधदेहलयासंप्रयच्छति स्पर्शम्वाप्यथवाशब्दंरा
संरूपमथापिवा ४१ चिरात्कृततरंतद्वन्महान्तमपिकालजं एवंचसुखदुःखानिपुण्यपापोद्भवानिच ४२ भुंजानोनेकसंसारसंभवानीह।
गच्छति जातिदेशविरुद्धानिज्ञानाज्ञानकृतानिच ४३ तिष्ठंतितत्रपृक्तानिलिंगमात्रांतरात्मनि कर्मणामनसावाचानकदाचिन्नकश्चिन्नरः ४४ अ
कुर्वन्यातकंकर्मपुण्यंवाप्यवतिष्ठते यद्यदाप्नोतिपुरुषःसुखंदुःखमथापिवा ४५ प्रभूतमथवास्वल्पंविक्रियाकारिचेतनः यावत्तावत्तात।
स्यपापंवापुण्यमेवच ॥ ४६ उपभोगात्क्षयंयातिभुज्यमानमिवाशनं पापिनोहिमहापापंयातनाभिरहर्निशं ४७ क्षपयंतिमहाघोरंन
रकांतरवर्तिनः तथैवबहुपुण्यानिस्वर्गलोकेमरैःसह ४८ गंधर्वसिद्धाप्सरसांगीताद्यैरुपभुंजते देवत्वेचमनुष्यत्वेतिर्यक्त्वेचशुभा।
शुभं ४९ पुण्यपापोद्भवंभुंक्तेसुखदुःखोपलक्षणं इत्येवंसर्वमाख्यातंतद्गच्छहरिसन्निधौ ५० इतिविदितसुधर्माराजपुत्रोयमोक्त्या
समधिगतविमानंराजपुत्रोधिरुह्यसकलकलुषमुक्तःकार्तिकेविष्णुपूजाजनितसुकृतपुंजान्निश्चलंविष्णुमाप ५१॥ इतिश्रीपद्मपुराणे।
कार्तिकमाहात्म्येषोडशोऽध्यायः १६ नारदउवाच अथान्यदपिविप्रेंद्रशृणुमेगदतःपुरा धर्मदत्तःस्वपुण्येनकलहामुद्धरद्यथा १ आसीत्स
ह्याद्रिविषयेकरवीरपुरेपुरा ब्राह्मणोधर्मवित्कश्चिद्धर्मदत्तेतिविश्रुतः २ विष्णुव्रतकरःशश्वद्विष्णुपूजारतःसदा द्वादशाक्षरविद्याजप।

निष्ठोतिथिप्रियः ३ कदाचित्कार्तिके मासि हरिजागरणाय सः रात्र्यां तुर्यांशशेषायां जगाम हरिमंदिरं ४ हरिपूजोपकरणान्यादाय व्रजता तदा तेन दृष्टा समायांती राक्षसी भीमनिःस्वना ५ वक्रदंष्ट्रा ललज्जिह्वा निमग्नारक्तलोचना दिगंबरा शुष्कमांसा लंबोष्ठी घर्घरस्वना ६ तां दृष्ट्वा भयवित्रस्तः कंपितावयवस्तदा पूजोपकरणैर्वेगात्तयोभिघ्नाहनद्रुषा ७ संस्मृत्य च हरेर्नाम तुलसीयुक्तवारिणा सोहनत्तां ततस्तस्याः सर्वमगात्क्षयं ८ अथ संस्मृत्य सा पूर्वजन्मकर्मविपाकजं स्वां दशां चाब्रवीद्विप्रं दंडवच्च प्रणम्य सा ९ पूर्वकर्मविपाकेन दशामेतां गतास्म्यहं तत्कथं तु पुनर्विप्र यास्याम्युत्तमगतिं शुभां १० तां दृष्ट्वा प्रणतामग्रे वदमानां स्वकर्म तत् अतीव विस्मितो विप्रस्तदा वचनमब्रवीत् ११ धर्मदत्त उवाच केन कर्मविपाकेन त्वं दशामीदृशीं गता कुतस्त्या कासि किंशीला तत्सर्वं कथयस्व मे १२ कलहोवाच सौराष्ट्रनगरे ब्रह्मन्भिक्षुनामाभवद्द्विजः तस्याहं गृहिणी पूर्वं कलहाख्यातिनिष्ठुरा १३ न कदाचिन्मया भर्तुर्वचसापि शुभं कृतं नार्पितं तस्य मिष्टान्नं भर्तुर्वचनशीलया १४ कलहप्रियया नित्यं स चोद्विग्नमना यदा परिणेतुं तदान्यां स मतिं चक्रे पतिर्मम १५ ततो गरं समादाय प्राणास्त्यक्ता मया द्विज अथ बद्ध्वा च नीयमानां विनिघ्नंतो यमानुगाः १६ यमश्च मां तदा दृष्ट्वा चित्रगुप्तमपृच्छत यम उवाच अनया किं कृतं कर्म चित्रगुप्त विलोकय १७ प्राप्नोत्वियं कर्मफलं शुभं वा यदि वाशुभं कलहोवाच चित्रगुप्तस्तदा वाक्यं भर्त्सयन्मामुवाच सः १८ अनया तु शुभं कर्म कृतं किंचिन्न विद्यते मिष्टान्नं भुज्यमानं यत्तद्भर्त्रे तदर्पितं १९ विष्टादा शूकरी योन्यां तस्मात्तिष्ठत्वियं हरे पाकभांडे सदा भुंक्ते गुप्तं वैषा यतस्ततः २० तस्माद्देषा विडाली स्यात्स्वजातापत्यभक्षिणी भर्तारं च यदुद्दिश्य ह्यात्मघातः कृतोनया २१ तस्मात्प्रेतशरीरेण तिष्ठत्वेषा विनिंदिता अतश्चैषा मरुद्देशं प्राप्य तां तावकैर्हरे २२ तत्र प्रेतशरीरेण चिरं तिष्ठत्वियं ततः ऊर्ध्वं योनित्रयं चैषा भुनक्ति शुभकारिणी २३ कलहोवाच साहं पंचशताब्दानि प्रेतदेहस्थिता किल ॥

सुतृड्भ्यां पीडितात्यर्थं दुःखिता स्वेन कर्मणा २४ ततः क्षुत्पीडिता विश्य शरीरं वणिजस्य वै आयाता दक्षिणां देशं कृष्णावेण्योस्तु संगमं २५
तत्तीरसंस्थिता यावत्तावत्तस्य शरीरतः शिवविष्णुगणैर्दूतमणाकृष्य बलादहं २६ तस्मादागम्यते विप्र दृष्टस्त्वं च मया प्रमोत्वद्धस्तात्तुल
सी वारिसंसर्गगतपापया २७ तत्कृपां कुरु विप्रेंद्र कथं मुक्तिं व्रजाम्यहं योनित्रयादग्रभाव्यादस्माच्च प्रेतदेहतः २८ नारद उवाच इत्थं
निशम्य कलहावचनं द्विजाग्र्यस्तत्कर्मपाकभवविस्मयदुःखयुक्तः कष्टं भविष्यति कृपाद्र्वचित्त इति ध्यात्वा चिरं स वचनं निजगाद दुः
खात् २९ धर्मदत्त उवाच विलयं यांति पापानि तीर्थदानव्रतादिभिः प्रेतदेहस्थितायास्ते तेषु नैवाधिकारिता ३० त्वद्रूपदर्शनादस्मात्खि
न्नं च मम मानसं नैव निर्वृतिमायांति त्वामनुस्मृत्य दुःखितां ३१ पातकं च न वा तस्य यद्योनित्रयपाकजं नैवास्य क्षीयते पुण्यैः प्रेतत्वं चानिग
र्हितं ३२ तस्मादाजन्मजनितं यन्मे स्यात्कार्तिकव्रतं तत्पुण्यस्यार्द्धभागेन सद्गतिं त्वमवाप्नुहि ३३ कार्तिकव्रतपुण्येन न साम्यं यांति सर्वदा य
ज्ञदानानि तीर्थानि व्रतानि च तथा ध्रुवं ३४ नारद उवाच इत्युक्त्वा धर्मदत्तोऽसौ यावत्तामभ्यषेचयत् तुलसीमिश्रतोयेन नाम्ना वै यद्द्वादशाक्ष
रं ३५ तावत्प्रेत्वाद्विनिर्मुक्ता ज्वलदग्निशिखोपमा दिव्यरूपधरा जाता लावण्येन यथेंदिरा ३६ ततः सा दंडवद्भूमौ प्रणनामाथ तं द्विजं उवाच
च तदा वाक्यं हर्षगद्गदभाषिणी ३७ कलहोवाच त्वत्प्रसादाद्द्विजश्रेष्ठ विमुक्ता निरयादहं पापाब्धौ मज्जमानायास्त्वं नौः सदृशोऽसि मे ध्रुवं ३८
नारद उवाच इत्थं सा वदती विप्रं ददृशे यानमंबरात् विमानं भास्वरं युक्तं विष्णुरूपधरैर्गणैः ३९ अथ सा तद्विमानाग्र्यं द्वास्थाभ्यां चावरोपिता
पुण्यशीलसुशीलाभ्यामप्सरोगणसेविता ४० ॥इति श्रीपद्मपुराणे कार्तिकमाहात्म्ये कलहोपाख्याने सप्तदशोऽध्यायः १७ नारद उवाच त
द्विमानं तदा पश्यद्धर्मदत्तः सविस्मयः पपात दंडवद्भूमौ दृष्ट्वा तौ विष्णुरूपिणौ १ पुण्यशीलसुशीलौ च तमुत्थाप्य नतं द्विजं समभ्यनंदयतां तदा

का॰ मा॰ ३२

मूचतुर्द्धर्मसंहितं २ गणावूचतुः साधुसाधुद्विजश्रेष्ठ त्वंहि विष्णुरतःसदा दीनानुकंपी धर्मज्ञो विष्णुव्रतपरायणः ३ आवालत्वाद्ध्रुवंयेनयत्त्व
याकार्तिकव्रतं कृतंतस्यार्द्धदानेनपुण्यद्वैगुण्यमागतं ४ त्वत्पुण्यस्यार्द्धभागेनयदस्याःपूर्वसंचितं जन्मांतरशतोद्भूतंपापंतद्विलयंगतं ५ स्ना
नैरेवगतंपापंयदस्याःपूर्वकर्मणा हरिजागरणाद्यैश्चविमानमिदमास्थितं ६ वैकुंठंनीयतेसाधोनानाभोगसुतान्वियं दीपदानभवैःपुण्यै
स्तेजसंचपुरास्थिता ७ तुलसीपूजनाद्यैश्चकार्तिकव्रतकैःशुभैः विष्णुसान्निध्यगाजातात्वयादत्ताकृपालुना ८ त्वमप्यस्यभवस्यांतेभार्यो
भ्यांसहयास्यसि वैकुंठभवनंविष्णोःसान्निध्यंचसरूपतां ९ तेधन्याःकृतकृत्याश्चतेषांचसफलोभवः यैर्भक्त्याराधितोविष्णुःकिंनयच्छति
देहिनां १० औत्तानपादिर्येनासौध्रुवत्वेस्थापितःपुरा यन्नामस्मरणाद्देवदेहिनोयांतिसद्गतिं ११ ग्राहग्रस्तोनागेन्द्रोयन्नामस्मरणात्पुरा
विमुक्तःसंनिधिंप्राप्यजातोऽयंजयसंज्ञकः १२ अतस्त्वयार्चितोविष्णुःस्वसान्निध्यंप्रदास्यति वहून्यब्दसहस्राणिभार्याद्वयसुतस्सते १३
ततःपुण्येस्वयंयातेयदायास्यसिभूतले सूर्यवंशोद्भवोराजाविख्यातस्त्वंभविष्यसि १४ नाम्नादशरथस्तत्रभार्याद्वयसुतःपुनःतृतीययान
याच्चापियातेपुण्यार्द्धभागिनी तत्रापितवसान्निध्यंविष्णुर्दास्यतिभूतले आत्मानंतवपुत्रत्वेप्रकल्प्यामरकार्यकृत् १६ धन्योसिविप्रामय
तस्त्वयैवंव्रतंकृतंतुष्टिकरंजगद्गुरोः यदर्द्धभागात्सफलात्सुरारेःप्रणीयतेऽस्मासिरियंसलोकतां १७ नारदउवाच इत्येतद्वचनंश्रुत्वाधर्मद
त्तःसविस्मयःप्रणम्यदंडवद्भूमौवाक्यमेतदुवाचह १८ धर्मदत्तउवाच आराधयंतिसर्वेऽपिविष्णुंभक्तार्तिनाशनं यज्ञदानव्रतैस्तीर्थैस्तपो
भिश्चयथाविधि १९ विष्णुप्रीतिकरंतेषांकिंस्वित्सान्निध्यकारकं यत्कृत्वातानिचीर्णानिसर्वाण्यपिभवंतिहि २० गणावूचतुःसाधुपृष्टंत्वया
याविप्रशृणुष्वैकाग्रमानसः सेतिहासांकथामत्रकथ्यमानांपुराभवां २१ कांतीपुर्यांपुराचोलश्चक्रवर्तीबभूवह यस्याख्ययैवतेदेशाश्चोलाइति

जा॰ १८

राम॰ ३२

